अथ बालकः शरीरेण बुद्ध्या च वर्द्धितुमारेभे अपरञ्च स इस्रायेलो ८०
वंशीयलोकानां समीपे यावन्न प्रकटीभूतस्तावत् प्रान्तरे न्यवसत्।

---

२ द्वितीयोऽध्यायः।

१ युषफो बैत्लिहिम् पुरयानं ख्रीष्टजन्म ८ स्वर्गीयदूतैर्मेषपानां समीपे तज्जन्माख्यानं १५ मेषपालकैरन्येभ्यस्तस्य व्यक्तीकरणं २१ ख्रीष्टस्य त्वक्छेदनं २२ मरियमः शुचिता २५ शिमियोनः कथा ३६ हन्नाचरित्रं ४० ख्रीष्टस्य वर्द्धनं ४१ बाल्ये वयसि पण्डितैः सह ख्रीष्टस्य प्रश्नोत्तरे च।

अपरञ्च तस्मिन् काले राज्यस्य सर्व्वेषां लोकानां नामानि लेखयि- १
तुम् अगस्तकैसर आज्ञापयामास तदनुसारेण कुरीणियनामनि सुरिया- २
देशस्य शासके सति नामलेखनं प्रारेभे। अतोहेतो र्नाम लेखितुम् सर्व्वे ३
जनाः स्वीयं स्वीयं नगरं जग्मुः। तदानीं युषफ् च नाम लेखितुं वाग्- ४
दत्तया स्वभार्य्यया गर्भवत्या मरियमा सह स्वयं दायूदः सजातिवंश इति ५
कारणाद् गालील्प्रदेशस्य नासरित् नगराद् यिहूदाप्रदेशस्य बैत्लिहि-
माख्यं दायूद्नगरं जगाम। अन्यच्च तत्र स्थाने तयोस्तिष्ठतोः सतो र्मरि- ६
यमः प्रसूतिकाल उपस्थिते सा तं प्रथमसुतं प्रासोष्ट। किन्तु तस्मिन् वास- ७
गृहे स्थानाभावाद् बालकं वस्त्रेण वेष्टयित्वा गोशालायां स्थापयामास।
अनन्तरं ये ये मेषपालकाः स्वमेषव्रजरक्षायै तत्प्रदेशेऽस्थित्वा रजन्यां ८
प्रान्तरे पर्य्यायानुक्रमेण प्रहरिणः कर्म्म कुर्व्वन्ति तेषां समीपं परमेश्वरस्य
दूत आगत्योपतस्थौ; तदा चतुष्पार्श्वे परमेश्वरस्य तेजसः प्रकाशितत्वात् ९
तेतिशशङ्किरे। तदा स दूत उवाच मा भैष्ट पश्यताद्य दायूदःपुरे युष्मन्नि- १०
मित्तं त्राता प्रभुः ख्रीष्टोऽजनिष्ट। सर्व्वेषां लोकानां महानन्दजनकम् ११
इमं मङ्गलवृत्तान्तं युष्मान् ज्ञापयामि। यूयं (तत्स्थानं गत्वा) वस्त्रवेष्टितं १२
तं बालकं गोशालायां शयानं द्रक्ष्यथ युष्मान् प्रतीतिचिह्नं भविष्यति।
दूत इमां कथां कथितवति तत्राकस्मात् स्वर्गीयाः पृतना आगत्य कथाम् १३
इमां कथयित्वेश्वरस्य गुणानन्ववादिषुः। यथा

१४ सर्व्वोर्द्ध्वस्थेश्वरस्यैव महिमा सम्प्रकाशतां।
शान्तिर्भूयात् पृथिव्यास्तु नराणां मङ्गलं भवेत्।

१५ ततःपरं तेषां सन्निधे र्दूतगणे स्वर्गं गते मेषपालकाः परस्परम् अवो-
चन् आगच्छत प्रभुः परमेश्वरो यां घटनां ज्ञापितवान् तस्य याथार्थ्यं
१६ ज्ञातुं वयमधुना वैत्लिहिम् पुरं यामः। पश्चात् ते तूर्णं व्रजित्वा मरियमं
१७ युषफं गोशालायां शयानं बालकञ्च ददृशुः। इत्थं दृष्ट्वा बालकस्यार्थे प्रोक्तां
१८ सर्व्वकथां ते प्रचारयाञ्चक्रुः। ततो ये लोका मेषरक्षकाणां वदनेभ्यस्तां
१९ वार्त्तां शुश्रुवुस्ते महाश्चर्य्यं मेनिरे। किन्तु मरियम् एतत्सर्व्वघटनानां
२० तात्पर्य्यं विविच्य मनसि स्थापयामास। तत्पश्चाद् दूतविज्ञप्तानुरूपं श्रुत्वा
दृष्ट्वा च मेषपालका ईश्वरस्य गुणानुवादं धन्यवादञ्च कुर्व्वाणाः परावृत्य
ययुः।

२१ अथ बालकस्य त्वक्छेदनकालेऽष्टमदिवसे समुपस्थिते तस्य गर्भस्थितेः
पूर्व्वं स्वर्गीयदूतो यथाज्ञापयत् तदनुरूपं ते तन्नामधेयं यीशुरिति चक्रिरे।
२२ ततःपरं मूसालिखितव्यवस्थाया अनुसारेण मरियमः शुचित्वकाल
२३ उपस्थिते 'प्रथमजः सर्व्वः पुरुषसन्तानः परमेश्वरे समर्प्यतां,' इति परमे-
२४ श्वरस्य व्यवस्थया यीशुं परमेश्वरे समर्पयितुम् एवं शास्त्रीयविध्युक्तं कपोतद्वयं
पारावतशावकद्वयं वा बलिं दातुं ते तं गृहीत्वा यिरूशालमम् आययुः।
२५ यिरूशालमपुरनिवासी शिमियोन् नामा धार्म्मिक एक आसीत् स
२६ इस्रायेलः सान्त्वनामपेक्ष्य तस्थौ किञ्च पवित्र आत्मा तस्मिन्नाविर्भूतः। अपरं
प्रभुना परमेश्वरेणाभिषिक्तं त्रातारं दृष्ट्वा त्वं न मरिष्यसीति वाक्यं पवित्रेण
२७ आत्मना तस्मै प्राकथ्यत। अपरञ्च यदा यीशोः पिता माता च तदर्थं व्यवस्था-
२८ नुरूपं कर्म्म कर्त्तुं तं मन्दिरम् आनिन्यतुस्तदा शिमियोन् आत्मन आक-
२९ र्षणेन मन्दिरमागत्य तं क्रोडे निधाय ईश्वरस्य धन्यवादं कृत्वा कथया-
मास। यथा

३० हे प्रभो तव दासोयं निजवाक्यानुसारतः।
इदानीन्तु सकल्याणो भवता संविसृज्यताम्।
३१ यतः सकलदेशस्य दीप्तये दीप्तिरूपकं।
इस्रायेलीयलोकस्य महागौरवरूपकं।

३२ य चायकं जनानान्तु सम्मुखे त्वमजीजनः।
सएव विद्यतेऽस्माकं ध्रुवं नयनगोचरे।

तदानीं तेनोक्ता एताः सकलाः कथाः श्रुत्वा तस्य माता युषफ् च ३३
विस्मयं मेनाते। ततःपरं शिमियोन् तेभ्य आशिषं दत्त्वा तन्मातरं मरियमम् ३४
उवाच पश्य इस्रायेलो वंशमध्ये बहूनां पातनायोत्थापनाय च तथा विरोध-
पात्रं भवितुम् एवं बहूनां गुप्तमनोगतानां प्रकटीकरणाय बालकोयं ३५
नियुक्तोस्ति। तस्मात् तवापि प्राणाः शूलेन व्यत्स्यन्ते।

अपरञ्च आशेरस्य वंशीयफिनूयेलो दुहिता हन्नाख्या अतिजरती ३६
भविष्यद्वादिन्येका या विवाहात् परं सप्त वत्सरान् पत्या सह न्यवसत् ततो
विधवा भूत्वा चतुरशीतिवर्षवयःपर्य्यन्तं मन्दिरे स्थित्वा प्रार्थनोपवासै ३७
र्दिवानिशम् ईश्वरम् असेवत सापि स्त्री तस्मिन् समये मन्दिरमागत्य पर-
मेश्वरस्य धन्यवादं चकार, एवं यिरूशालम् पुरवासिनो यावन्तो लोका ३८
मुक्तिमपेक्ष्य स्थितास्तान् यीशोर्वृत्तान्तं ज्ञापयामास। इत्थं परमेश्वरस्य ३९
व्यवस्थानुसारेण सर्व्वेषु कर्म्मसु कृतेषु तौ पुनश्च गालीलो नासिरत् नामकं
निजनगरं प्रतस्थाते।

तत्पश्चाद् बालकः शरीरेण वृद्धिमेत्य ज्ञानेन परिपूर्ण आत्मना शक्ति- ४०
मांश्च भवितुमारेभे तथा तस्मिन् ईश्वरानुग्रहो बभूव।

तस्य पिता माता च प्रतिवर्षं निस्तारोत्सवसमये यिरूशालमम् अग- ४१
च्छताम्। अपरञ्च यीशौ द्वादशवर्षवयस्के सति तौ पर्व्वसमयस्य रीत्यनु- ४२
सारेण यिरूशालमं गत्वा पार्व्वणं सम्पाद्य पुनरपि व्याघुट्य यातः किन्तु ४३
यीशुर्बालको यिरूशालमे तिष्ठति युषफ् तन्माता चैतद् अविदित्वा स
ङ्गिभिः सह विद्यते, एतच्च बुद्ध्वा दिनैकगम्यमार्गं जग्मतुः। किन्तु शेषे ४४
ज्ञातिबन्धूनां समीपे मृगयित्वा तदुद्देशमप्राप्य तौ पुनरपि यिरूशालमं ४५
परावृत्यागत्य तं मृगयाञ्चक्रतुः। अथ दिनत्रयात् परं पण्डितानां मध्ये ४६
तेषां कथाः शृण्वन्तं तत्त्वं पृच्छन्तञ्च मन्दिरे समुपविष्टं तं तौ ददृशतुः।
एवं तस्य बुद्ध्या प्रत्युत्तरैश्च सर्व्वे श्रोतारो विस्मयमापद्यन्ते। तादृशं दृष्ट्वा ४७

४८ तस्य जनको जननी च चमच्चक्रतुः किञ्च तस्य माता तमवदत् हे पुत्र
कथमावां प्रतीत्थं समाचरस्त्वम् पश्य तव पिताहञ्च शोकाकुलौ सन्तौ
४९ त्वामन्विच्छावः स्म। ततः सोवदत् कुतोमाम् अन्वैच्छतं पितुर्गृहे मया
५० स्थातव्यम् एतत् किं युवाभ्यां न ज्ञायते? किन्तु तौ तस्यैतद्वाक्यस्य तात्पर्य्यं
५१ बोद्धुं नाशक्नुतां। ततःपरं स ताभ्यां सह नासिरितं गत्वा तयो र्वशीभूत
५२ स्तस्थौ किन्तु सर्व्वा एताः कथास्तस्य माता मनसि स्थापयामास। अथ
यीशो र्बुद्धिः शरीरञ्च तथा तस्मिन् ईश्वरस्य मानवानाञ्चानुग्रहो वर्द्धितुम्
आरेभे।

---

### ३ तृतीयोध्यायः।

१ योहनद्वारा प्रचारो मज्जनञ्च १५ ख्रीष्टार्थे तस्य साक्ष्यदानं १९ योहनः कारा-
बन्धनं २१ ख्रीष्टस्य मज्जनं २३ ख्रीष्टस्य वंशश्रेणी च।

१ अनन्तरं तिबिरियकैसरस्य राजत्वस्य पञ्चदशे वत्सरे सति यदा
पन्तियपिलातो यिहूदादेशाधिपति र्हेरोद् तु गालील्प्रदेशस्य राजा
फिलिप्नामा तस्य भ्राता तु यितूरियायास्त्राखोनीतिप्रदेशस्य च राजा-
२ सीत् एवं लुषानीयनामा अबिलीनीदेशस्य राजासीत्, एवं हनान् कियफास्चैमौ प्रधानयाजकावास्तां तदानीं सिखरीयस्य पुत्राय योहने मध्ये
३ प्रान्तरम् ईश्वरस्य वाक्ये प्रकाशिते सति स यर्द्दन उभयतटस्थप्रदेशान् समेत्य
पापमोचनार्थं मनःपरावर्त्तनस्य चिह्नरूपं यन्मज्जनं तदीयाः कथाः सर्व्वत्र
४ प्रचारयितुमारेभे। यिशायियभविष्यद्वक्तृग्रन्थे यादृशी लिपिरास्ते यथा

५ परमेशस्य पन्थानं परिष्कुरुत सर्व्वतः।
तस्य राजपथञ्चैव समानं कुरुताधुना।
कारिष्यन्ते समुच्छ्राया: सकला निम्नभूमयः।
कारिष्यन्ते नताः सर्व्वे पर्व्वताश्चोपपर्व्वताः।
६ कारिष्यन्ते च या वक्रास्ताः सर्व्वाः सरलाः किल।
कारिष्यन्ते समानास्ता या उच्चनीचभूमयः।
ईश्वरेण कृतं त्राणं द्रक्ष्यन्ति सर्व्वमानवाः।
प्रान्तरे वै त्विदं वाक्यं वदतः कस्यचिद् रवः।

ये ये लोका मज्जनार्थं वहिराययुस्तान् सोवदत् रे रे सर्प- ७
वंशा आगामिनः कोपात् पलायितुं युष्मान् कश्चेतयामास ? तस्माद् ८
इब्राहिम् अस्माकं पिता कथामीदृशीं मनोभि र्न कथयित्वा यूयं मनः
परिवर्त्तनयोग्यं फलं फलत; युष्मानहं यथार्थं वदामि पाषाणेभ्य
एतेभ्य ईश्वर इब्राहीमः सन्तानोत्पादने समर्थः। अपरञ्च तरुमूलेऽधु- ९
नापि परशुः संलग्नोस्ति यस्तरुरुत्तमं फलं न फलति स छिद्यतेऽग्नौ
निक्षिप्यते च। तदानीं लोकास्त पप्रच्छुस्तर्हि किं कर्त्तव्यमस्माभिः? ततः १०
सोवादीत् यस्य द्वे वसने विद्येते स वस्त्रहीनायैकं वितरतु किञ्च यस्य खाद्य ११
द्रव्यं विद्यते सोपि तथैव करोतु। ततःपरं करसञ्चायिनो मज्जयितुम् १२
आगत्य पप्रच्छुः हे गुरो किं कर्त्तव्यमस्माभिः? ततः सोकथयत् निरूपिता- १३
दधिकं बलान्न गृह्लीत। अनन्तरं सेनागण एत्य पप्रच्छ किमस्माभि र्वा १४
कर्त्तव्यम् ततः सोभिदधे कस्य कामपि हानिं मा कार्ष्ट तथा मृषापवादं
मा कुरुत एवं निजवेतनेन सन्तुष्य तिष्ठत।

अपरञ्च लोका अपेक्षया स्थित्वा सर्व्वेपीति मनोभि र्वितर्कयाञ्चक्रुः, योहन- १५
यम् अभिषिक्तस्त्राता नवेति? तदा योहन् सर्व्वान् व्याजहार जलेऽहं युष्मान् १६
मज्जयामि सत्यं किन्तु यस्य पादुकाबन्धनं मोचयितुमपि न योग्योस्मि
तादृश एको मत्तो गुरुतरः पुमान् एति स युष्मान् वह्निरूपे पवित्र आत्मनि
मज्जयिष्यति। अपरञ्च तस्य हस्ते शूर्प आस्ते स स्वशस्यानि शुद्धरूपं प्रस्फोट्य १७
गोधूमान् सर्व्वान् भाण्डागारे संग्रहीष्यति किन्तु वुषाणि सर्व्वाण्यनिर्व्वाण-
वह्निना दाहयिष्यति। योहन् उपदेशेनेत्थं नानाकथा लोकानां समक्षं १८
प्रचारयामास।

अपरञ्च हेरोद् राजा फिलिप्नाम्नः सहोदरस्य भार्य्याया हेरोदि- १९
याया अथ तथान्यानि यानि यानि कुकर्म्माणि कृतवान् तदधिकं च यो- २०
हना तिरस्कृतो भूत्वा तं कारागारे बद्ध्वा कुकर्म्मैकं चकार।

इतःपूर्व्वं यस्मिन् समये सर्व्वे योहना मज्जितास्तदानीं यीशुरप्या- २१
गत्य मज्जितः। तदनन्तरं तेन प्रार्थिते मेघद्वारं मुक्तं तस्माच्च पवित्र आत्मा २२

मूर्त्तिमान् भूत्वा कपोतवत् तदुपर्य्यवरुरोह, एवं त्वं मम प्रियः पुत्रस्त्वयि
२२ मम परमः सन्तोष इत्याकाशवाणी बभूव। तदानीं यीशुः प्रायेण त्रिंश-
२३ द्वर्षवयस्क एवं लौकिकज्ञाने स युषफः पुत्रो युषफ् हेल्यः पुत्रो हेली
मत्तहः पुत्रो मत्तह् लेव्यः पुत्रो लेवी मल्क्यः पुत्रो मल्की यान्यः पुत्रो
२४ यान्नो युषफः पुत्रः। युषफ् मथ्यः पुत्रो मथीः आमोषः पुत्र आमोस् नाहूमः
२५ पुत्रो नाहूम् हिस्ल्यः पुत्रो हिस्ली नग्यः पुत्रः। नगी मातः पुत्रो मात्
मथ्यः पुत्रो मथीः शिम्यः पुत्रः शिमी युषफः पुत्रो युषफ् यिहूदाः पुत्रः।
२६ यिहूदा योहनाः पुत्रो योहना रिषेः पुत्रो रिषिः सिरुबाविलः पुत्रः
२७ सिरुबाविल् शियल्तीयलः पुत्रः शियल्तीयल् नेर्य्यैः पुत्रः। नेरी मल्क्यः
पुत्रो मल्कीः अद्यः पुत्रो अद्दीः कोषमः पुत्रः कोषम् अल्मोदमः पुत्रो
२८ अल्मोदम् एरः पुत्रः। एर् योसेः पुत्रो योसिः इलीयिसिरः पुत्र इलीयि-
२९ सिर योरमः पुत्रो योरम् मत्तहः पुत्रो मत्तह् लेव्यः पुत्रः। लेवीः शिमि-
योनः पुत्रः शिमियोन् यिहूदाः पुत्रो यिहूदा युषफः पुत्रो युषफ्
३० योननः पुत्रो योनन् इलीयाकीमः पुत्रः। इलियाकीम् मलियः पुत्रो
मलिय मिननः पुत्रो मिनन् मत्तताः पुत्रो मत्तता नाथनः पुत्रो नाथन्
३१ दायूदः पुत्रः। दायूद् यिशयः पुत्रो यिशय ओवेदः पुत्र ओवेद् बोयसः पुत्रो
३२ बोयस् सल्मोनः पुत्रः सल्मोन् नहशोनः पुत्रः। नहशोन् अम्मीनादवः पुत्रो
अम्मीनादव् अरमः पुत्रो अरम् हिस्रोणः पुत्रो हिस्रोण् फारिसः पुत्रः
३३ फारिस् यिहूदाः पुत्रः। यिहूदा याकुवः पुत्रो याकुव् इस्हाकः पुत्र
इस्हाक् इब्राहीमः पुत्र इब्राहीम् तिरहः पुत्रस्तिरह नाहोरः पुत्रः।
३४ नाहोर शिरूगः पुत्रः शिरूग् रियूः पुत्रो रियूः पिलिगः पुत्रः पिलिग्
३५ एविरः पुत्र एविर् शालहः पुत्रः। शालह् कैननः पुत्रः कैनन् अर्फक्षदः
पुत्रः अर्फक्षद् शामः पुत्रः शाम् नोहः पुत्रो नोहो लामिकः पुत्रः।
३६ लामिक् मिथूशिलहः पुत्रो मिथूशिलह् हनोकः पुत्रो हनोक् यिरिदः
३७ पुत्रो यिरिद् महललियेलः पुत्रो महललियेल् कैननः पुत्रः। कैनन
इनोशः पुत्र इनोश् शेतः पुत्रः शेत् आदमः पुत्र आदम् ईश्वरस्य पुत्रः।

## ४ चतुर्थोऽध्यायः।

१ शैतान्द्वारा खीष्टस्य परीक्षा १४ तेन प्रचारारम्भनं १६ अशुचिभूतत्याजनं ३८ पितरस्य श्वश्र्वारोग्यकरणं ४० नानाविधरोग्यारोग्यकरणञ्च।

ततःपरं यीशुः पवित्रेण आत्मना पूर्णः सन् यर्द्दननद्याः परावृत्य १
आत्मना प्रान्तरं नीतः सन् चत्वारिंशद्दिनानि यावत् शैताना परीक्षितोऽभूत्
किञ्च तानि सर्व्वदिनानि भोजनं विना स्थितत्वात् काले पूर्णे स क्षुधित- २
वान्। ततः शैतानागत्य तमवदत् त्वं चेदीश्वरस्य पुत्रस्तर्हि प्रस्तरानेतान् ३
आज्ञया पूपान् कुरु। तदा यीशुरुवाच लिपिरीदृशी विद्यते मनुजः केवलेन ४
पूपेन न जीवति किन्त्वीश्वरस्य सर्व्वाभिराज्ञाभि र्जीवति। तदा शैतान् ५
तमुच्चं पर्व्वतं नीत्वा निमिषैकमध्ये जगतः सर्व्वराज्यानि दर्शितवान्। पश्चात् ६
तमवादीत् सर्व्वम् एतद् राज्यस्य विभवं प्रतापञ्च सर्व्वं तुभ्यं दास्यामि तन्
मयि समर्पितमास्ते यं प्रति ममेच्छा जायते तस्मै दातुं शक्नोमि त्वं चेन्मां ७
भजसे तर्हि सर्व्वमेतत् तवैव भविष्यति। तदा यीशुस्तं प्रत्युक्तवान् दूरी भव ८
शैतान् लिपिरास्ते निजं प्रभुं परमेश्वरं भजस्व केवलं तमेव सेवस्व च।
अथ शैतान् तं यिरूशालमं नीत्वा मन्दिरस्य चूडाया उपरि समुपवेश्य ९
जगाद त्वं चेदीश्वरस्य पुत्रस्तर्हि स्थानादितो लम्फित्वाधः पत यतो १०
लिपिरास्ते

आज्ञापयिष्यति स्वीयान् दूतान् स परमेश्वरः।
११ रक्षितुं सर्व्वमार्गे त्वां तेन त्वच्चरणे यथा।
न लगेत् प्रस्तराघातस्त्वां धरिष्यन्ति ते तथा।

तदा यीशुना प्रत्युक्तम् इदमप्युक्तमस्ति त्वं स्वप्रभुं परेशं मा परीक्षस्व। १२
पश्चात् शैतान् सर्व्वपरीक्षां समाप्य क्षणात्तं त्यक्त्वा ययौ। १३
तदा यीशुरात्मप्रभावात् पुनर्गालीलप्रदेशं गतस्तदा तत्सुख्यातिश्चतु- १४
र्दिशं व्यानशे। एवं स तेषां भजनगेहेषु उपदिश्य सर्व्वैः प्रशंसितो बभूव। १५
अथ स स्वपालनस्थानं नासिरित्पुरमेत्य विश्रामवारे स्वाचाराद् भजन १६
गेहं प्रविश्य पठितुमुत्तस्थौ। ततो यिशायियभविष्यद्वादिनः पुस्तके १७

तस्य करदत्ते सति तत् पुस्तकं विस्तार्य्य यत्र वक्ष्यमाणानि वचनानि सन्ति तत्स्थानं प्राप्य पपाठ।

१८ आत्मा तु परमेशस्य ममोपरि हि विद्यते।
दरिद्रेषु सुसंवादं वक्तुं मां सोभिषिक्तवान्।
१९ भग्नान्तःकरणाल्लोकान् सुस्वस्थान् कर्त्तुमेव च।
वन्दीकृतेषु लोकेषु मुक्तेर्घोषयितुं वचः।
नेत्राणि दातुमन्धेभ्यस्त्रातुं बद्धजनानपि।
परेशानुग्रहे कालं प्रचारयितुमेव च।
सर्व्वैतत्करणार्थाय मामेव प्रहिणोति सः॥

२० ततः पुस्तकं बद्धा परिचारकस्य हस्ते समर्प्य चासने समुपविष्टः। ततो भजनगृहे यावन्तो लोका आसन् ते सर्व्वेऽनन्यदृष्ट्या तं विलुलोकिरे।
२१ अनन्तरम् अद्यैतानि सर्व्वाणि लिखितवचनानि युष्माकं मध्ये सिद्धानि स
२२ इमां कथां तेभ्यः कथयितुमारेभे। ततः सर्व्वे तस्मिन् अन्वरज्यन्त किञ्च तस्य मुखान्निर्गताभिरनुग्रहस्य कथाभिश्चमत्कृत्य कथयामासुः किमयं यूषफः
२३ पुत्रो न? तदा सोवादीद् हे चिकित्सक स्वमेव स्वस्थं कुरु कफर्नाहूमि यद्यत् कृतवान् तदश्रौष्म ताः सर्व्वाः क्रिया अत्र स्वदेशे कुरु कथामेतां यूय-
२४ मेवावश्यं मां वदिष्यथ। पुनः सोवादीद् युष्मानहं यथार्थं वदामि कोपि
२५ भविष्यद्वादी स्वदेशे सत्कारं न प्राप्नोति। अपरञ्च यथार्थं वच्मि एलियस्य जीवनकाले यदा सार्द्धत्रितयवर्षाणि यावद् जलदप्रतिबन्धात् सर्व्वस्मिन् देशे महादुर्भिक्षम् अजनिष्ट तदानीम् इस्रायेलो देशस्य मध्ये बह्व्यो विधवा
२६ आसन्, किन्तु सीदोन्प्रदेशीयसारिफत्पुरनिवासिनीम् एकां विधवां
२७ विना कस्याश्चिदपि समीपे एलियः प्रेरितो नाभूत्। अपरञ्च इलीशायभविष्यद्वादिविद्यमानताकाले इस्रायेल् देशे बहवः कुष्ठिन आसन् किन्तु सुरीय-
२८ देशीयं नामन् कुष्ठिनं विना कोप्यन्यः परिष्कृतो नाभूत्। इमां कथां
२९ श्रुत्वा भजनगेहस्थिता लोकाः सक्रोधम् उत्थाय नगरात्तं वहिष्कृत्य यस्य

शिखरिण उपरि तेषां नगरं स्थापितमास्ते तस्मान्निक्षेप्तुं तस्य शिखरं तं ३०
निन्युः किन्तु स तेषां मध्यादपसृत्य स्थानान्तरं जगाम।

ततःपरं यीशुः गालील्प्रदेशीयकफर्नाहूमनगर उपस्थित्य विश्राम- ३१
वारे लोकानुपदेष्टुम् आरब्धवान्। एवं तदुपदेशात् सर्व्वे चमच्चक्रु र्यत- ३२
स्तस्य कथा गुरुतरा आसन्। तदानीं तद्भजनगेहस्थितोऽमेध्यभूतग्रस्त ३३
एकोजन उच्चैः कथयामास हे नासरीययीशोऽस्मान् त्यज, त्वया सहा- ३४
स्माकं कः सम्बन्धः? किमस्मान् विनाशयितुमायासि? त्वमीश्वरस्य पवित्रो
लोक एतदहं जानामि। तदा यीशुस्तं तर्जयित्वावदत् मौनी भव इतो ३५
वहिर्भव ततः सोमेध्यभूतस्तं मध्यस्थाने पातयित्वा किञ्चिदप्यहिंसित्वा
तस्माद् वहिर्गतवान्। ततः सर्व्वे लोकास्चमत्कृत्य परस्परं वक्तुमारेभिरे ३६
कोयं चमत्कारः एष प्रभावेन पराक्रमेण चामेध्यभूतान् आज्ञापयति
तेनैव ते वहिर्गच्छन्ति। अनन्तरं चतुर्दिकस्थदेशान् तस्य सुख्याति ३७
र्व्याप्नोत्।

तदनन्तरं स भजनगेहाद् वहिरागत्य शिमोनो निवेशनं प्रविवेश ३८
तदा तस्य श्वश्रूर्ज्वरेणात्यन्तं पीडितासीत् एवं शिष्यास्तदर्थं तस्मिन्
विनयं चक्रुः। ततः स तस्याः समीपे स्थित्वा ज्वरं तर्जयामास तेनैव तां ३९
ज्वरोऽत्याक्षीत् ततः सा तत्क्षणम् उत्थाय तान् सिषेवे।

अथ सूर्य्यास्तकाले स्वेषां ये ये जना नानारोगैः पीडिता आसन् ४०
लोकास्तान् यीशोः समीपम् आनिन्युः; तदा स एकैकस्य गात्रे करमर्पयित्वा
तानरोगान् चकार। ततो भूता बहुभ्यो निर्गत्य चीत्शब्दं कृत्वा च बभा- ४१
षिरे त्वमीश्वरस्य पुत्रोऽभिषिक्तत्राता; किन्तु सोभिषिक्तत्रातेति विविदुः,
एतस्मात् कारणात् तान् तर्जयित्वा तद्वक्तुं निषिषेध। अपरञ्च प्रभाते सति ४२
स विजनस्थानं प्रतस्थे पश्चाद् जनास्तमन्विच्छन्तस्तन्निकटं गत्वा स्थाना-
न्तरगमनार्थं तमन्वरुन्धन्। किन्तु स तान् जगाद, ईश्वरीयराज्यस्य ४३
सुसंवादं प्रचारयितुम् अन्यानि पुराण्यपि मया यातव्यानि यत् तद-
र्थमेव प्रेरितोहं। अथ गालीलो भजनगेहेषु स उपदिदेश। ४४

## ५ पञ्चमोऽध्यायः।

१ अनेकमत्स्यधरणं १२ कुष्ठिनः परिष्कारणं १७ पक्षाघातिनः स्वास्थ्यकरणं पापमर्षणं २७ मथीनाम्न आह्वानम् तद्गेहे भोजनं ३३ अनुपवासकारणनिर्णयश्च।

१ अनन्तरं यीशुरेकदा गिनिषरित् ह्रदस्य तीर उत्तिष्ठति, तदा लोका
२ ईश्वरीयकथां श्रोतुं तदुपरि प्रपतिताः। तदानीं स ह्रदस्य तीरसमीपे
नौद्वयं ददर्श किञ्च मत्स्योपजीविनो नावं विहाय जालं प्रक्षालयन्ति।
३ ततस्तयोर्द्वयो र्मध्ये शिमोनो नावमारुह्य तीरात् किञ्चिद्दूरं यातुं तस्मिन्
४ विनयं कृतवान् एवं नौकायामुपविश्य लोकान् प्रोपदिष्टवान्। पश्चात् तं
प्रस्तावं समाप्य स शिमोनं व्याजहार गभीरं जलं गत्वा मत्स्यान् धर्त्तुं जालं
५ निक्षिप। ततः शिमोन् बभाषे हे गुरो यद्यपि वयं कृत्स्नां यामिनीं परि-
६ श्रम्य मत्स्यैकमपि न प्राप्तास्तथापि भवतो निदेशतो जालं क्षिपामः। अथ जाले
७ क्षिप्ते बहुमत्स्यपतनाद् आनायः प्रच्छिन्नः। तस्माद् उपकर्त्तुम् अन्यनौस्थान्
सङ्गिन आयातुम् इङ्गितेन समाह्वयन् ततस्त आगत्य मत्स्यै र्नौद्वयं प्रपूर-
८ यामासु र्यै र्नौद्वयं प्रमंक्षुम्। तदा शिमोन् पितरस्तद् विलोक्य यीशोश्च-
रणयोः पतित्वा हे प्रभोऽहं पापी नरो मम निकटाद् यातु भवान्
९ इति कथितवान्। यतो जाले पतितानां मत्स्यानां यूथात् शिमोन्
तत्सङ्गिनश्च चमत्कृतवन्तः। एवं शिमोनः सहकारिणौ सिवदेः पुत्रौ
१० याकुब योहन् चेमौ तादृशौ बभूवतुः। तदा यीशुः शिमोनं जगाद
११ मा भैषीरद्यारभ्य त्वं मनुष्यधरो भविष्यसि। अनन्तरं सर्व्वासु नौषु तीरम्
आनीतासु ते सर्व्वान् परित्यज्य तस्य पश्चाद्गामिनो बभूवुः।
१२ ततः परं यीशौ कस्मिंश्चित् पुरे तिष्ठति जन एकः सर्व्वाङ्गकुष्ठस्तं
विलोक्य तस्य समीपे न्युब्जः पतित्वा सविनयं वक्तुमारेभे हे प्रभो यदि
१३ भवानिच्छति तर्हि मां परिष्कर्त्तुं शक्नोति। तदानीं स पाणिं प्रसार्य्य
तदङ्गं स्पृशन् बभाषे त्वं परिष्क्रियस्वेति ममेच्छास्ति ततस्तत्क्षणं स कुष्ठेन
१४ मुक्तः। पश्चात् स तमाज्ञापयामास कथामिमां कस्मैचिद् अकथयित्वा
याजकस्य समीपञ्च गत्वा स्वं दर्शय, एवं लोकेभ्यो निजपरिष्कृतत्वस्य प्रमाण-
१५ दानाय मूसाज्ञानुसारेण द्रव्यमुत्सृजस्व। तथापि यीशोः सुख्यातिर्बहु

व्याप्नुमारेभे किन्तु तस्य कथां श्रोतुं स्वीयरोगेभ्योमोक्तुञ्च लोका आजग्मुः। १६
अथ स प्रान्तरं गत्वा प्रार्थयाञ्चक्रे।

अपरञ्च एकदा यीशुरुपदिशति, एतर्हि गालील्यिहूदाप्रदेशयोः १७
सर्व्वनगरेभ्यो यिरूशालमश्च कियन्तः फिरूशीलोका व्यवस्थापकाश्च समा-
गत्य तदन्तिके समुपविविशुः; तस्मिन् काले लोकानामारोग्यकरणात्
प्रभोः प्रभावः प्रचकाशे। पश्चात् कियन्तो लोका एकं पक्षाघातिनं खट्वायां १८
निधाय यीशोः समीपमानेतुं सम्मुखे स्थापयितुञ्च व्याप्रियन्त। किन्तु १९
बहुजननिवहसम्बाधात् न शक्नुवन्तो गृहोपरि गत्वा गृहपृष्ठं खनित्वा तं
पक्षाघातिनं सखट्वं गृहमध्ये यीशोः सम्मुखे अवरोहयामासुः। तदा २०
यीशुस्तेषाम् ईदृशं विश्वासं विलोक्य तं पक्षाघातिनं व्याजहार हे
मानव तव पापमक्षम्यत। तस्मात् अध्यापकाः फिरूशिनश्च चित्तैरित्थं २१
प्रचिन्तिता, एष जन ईश्वरं निन्दति कोयं? केवलमीश्वरं विना पापं २२
क्षन्तुं कः शक्नोति? तदा यीशुस्तेषाम् इत्थं चिन्तनं विदित्वा तेभ्योकथ-
यद् यूयं मनोभिः कुतो वितर्कयथ? तव पापक्षमा जाता यद्वा त्वमुत्थाय २३
व्रज एतयो र्मध्ये का कथा सुकथ्या। किन्तु पृथिव्यां पापं क्षन्तुं मानवसुतस्य २४
सामर्थ्यमस्तीति यथा यूयं ज्ञातुं शक्नुथ तदर्थं (स तं पक्षाघातिनं जगाद)
उत्तिष्ठ स्वशय्यां गृहीत्वा गृहं याहीति त्वामादिशामि। तस्मात् स २५
तत्क्षणं उत्थाय सर्व्वेषां साक्षात् निजशयनीयं गृहीत्वा ईश्वरं धन्यं वदन्
निजनिवेशनं ययौ। तस्मात् सर्व्वे विस्मयं प्राप्ता मनःसु भीताश्च वयम- २६
द्यासम्भवकार्य्यम् अदर्शाम इत्युक्त्वा परमेश्वरं धन्यं प्रोदिताः।

ततःपरं वहिर्गच्छन् करसञ्चायिनो गृहे लेवीनामानं करसञ्चायकं २७
दृष्ट्वा यीशुस्तमभिदधे मम पश्चादेहि। तस्मात् स तत्क्षणात् सर्व्वं परित्यज्य २८
तस्य पश्चादियाय। अनन्तरं लेवी निजगृहे तदर्थं महाभोज्यं चकार २९
तदा तैः सहानेके करसञ्चायिनस्तदन्यलोकाश्च भोक्तुमुपविविशुः।
तस्मात् कारणात् चण्डालानां पापिलोकानाञ्च सङ्गे यूयं कुतो भुङ्ग्ध्वे ३०
पिवथचेति कथां कथयित्वा फिरूशिनोऽध्यापकाश्च तस्य शिष्यैः सह वाग्युद्धं

३१ कर्त्तुमारेभिरे। तस्माद् यीशुस्तान् प्रत्यवोचद् अरोगलोकानां चिकि-
३२ त्सकेन प्रयोजनं नास्ति किन्तु सरोगाणामेव। अहं धार्म्मिकान् आह्वातुं
नागतोस्मि किन्तु मनः परावर्त्तयितुं पापिन एव।
३३ ततस्ते प्रोचु र्योहनः फिरूशीनाञ्च शिष्या वारंवारम् उपवसन्ति प्रार्थ-
३४ यन्ते च किन्तु तव शिष्याः कुतो भुञ्जते पिवन्ति च। तदा तानाचख्यौ वरे
३५ सङ्गे तिष्ठति वरस्य सखिगणं किमुपवासयितुं शक्नुथ? किन्तु यदा तेषां
३६ निकटाद् वरो नेष्यते तदा ते समुपवत्स्यन्ति। सोपरमपि दृष्टान्तं कथ-
याम्बभूव पुरातनवस्त्रे कोपि नूतनवस्त्रं न सीव्यति यतस्तेन सेवनेन जीर्ण-
३७ वस्त्रं छिद्यते किञ्च नूतनपुरातनवस्त्रयो र्मेलनं न भवति। एवं पुरातन्यां कुत्वां
कोपि नूतनं द्राक्षारसं न स्थापयति यतो नवीनद्राक्षारसस्य तेजसा पुरा-
३८ तनी कुतू र्विदीर्य्यते ततो द्राक्षारसः पतति कुतूश्च नश्यति। ततोहेतो
३९ र्नूतन्यां कुत्वां नवीनद्राक्षारसः स्थापनीयस्तेनोभयस्य रक्षा भवति। अप-
रञ्च पुरातनं द्राक्षारसं पीत्वा कोपि नूतनं न वाञ्छति यतः स वक्ति
नूतनात् पुरातनम् प्रशस्तम्।

---

६ षष्ठोऽध्यायः।

विश्रामवारार्थे फिरूशीनां निरुत्तरकरणं ६ शुष्ककरस्यारोग्यकरणं १२ शिष्याणां मनोनीतत्वकरणं १७ रोगिणामारोग्यकरणं २० शिष्याणामुपदेशः २७ शत्रुप्रेमकरणं ३७ उपदेशः ३९ परस्य दोषित्वकरणनिषेधः ४६ गृहनिर्म्माणदृष्टान्तकथा च।

१ अपरञ्च पर्व्वणो द्वितीयदिनात् परं प्रथमविश्रामवारे शस्यक्षेत्रेण यीशो
र्गमनकाले तस्य शिष्याः कणिशं छित्वा करेषु मर्द्दयित्वा खादितुमारे-
२ भिरे। तस्मात् कियन्तः फिरूशिनस्तानवदन् विश्रामवारे यत् कर्म्म न
३ कर्त्तव्यं तत् कुतः कुरुथ? यीशुः प्रत्युवाच दायूद् तस्य सङ्गिनश्च क्षुधार्त्ताः
४ किं चक्रुः स कथम् ईश्वरस्य मन्दिरं प्रविश्य ये दर्शनीयाः पूपा याजकान्
विनान्यस्य कस्याप्यभोजनीयास्तानानीय स्वयं बुभुजे सङ्गिभ्योपि ददौ तत

किं युष्माभिः कदापि नापाठि? पश्चात् स तानवदत् मनुजसुतो विश्राम- ५
वारस्यापि प्रभुर्भवति।

अनन्तरं अन्यविश्रामवारे स भजनगेहं प्रविश्य समुपदिशति। तदा ६
तत्स्थाने शुष्कदक्षिणकर एकः पुमान् उपतस्थिवान्। तस्माद् अध्यापकाः ७
फिरूशिनश्च तस्मिन् दोषमारोपयितुं स विश्रामवारे तस्य स्वास्थ्यं करोति
नवेति प्रतीक्षितुमारेभिरे। तदा यीशुस्तेषां चिन्तां विदित्वा तं शुष्ककरं ८
पुमांसं प्रोवाच त्वमुत्थाय मध्यस्थाने तिष्ठ। तस्मात् तस्मिन् उत्थाय तिष्ठति ९
सति यीशुस्तान् व्याजहार युष्मान् इमां कथां पृच्छामि विश्रामवारे भद्रम्
अभद्रं वा तथा प्राणरक्षणं प्राणनाशनं वा, एषां किं कर्म्म करणीयम्? पश्चात् १०
चतुर्दिक्षु सर्व्वान् विलोक्य तं मानवं बभाषे निजकरं प्रसारय; ततस्तेन
तथा कृते इतरकरवत् तस्य हस्तः स्वस्थोभवत्। तस्मात् ते प्रचण्डकोपा- ११
न्विता यीशुं किं करिष्यन्तीति परस्परं प्रमन्त्रिताः।

ततःपरं स पर्व्वतमारुह्य कृत्स्नां रात्रिम् ईश्वरप्रार्थनागेहे तस्थिवान्। १२
अथ दिने सति स सर्व्वान् शिष्यान् आहूतवान् एवं तेषां मध्ये पितरनाम्ना १३
ख्यातः शिमोन् तस्य भ्राता आन्द्रियश्च याकुब् योहन् च फिलिप् बर्थ- १४
लमीश्च मथीः थोमाश्च आल्फीयः पुत्रो याकुब् ज्वलन्तनाम्ना ख्यातः १५
शिमोन् च याकुबो भ्राता यिहूदाश्च तं यः परकरेषु समर्पयिष्यति स
ईष्कारीयोतीययिहूदाश्च एतान् द्वादश जनान् मनोनीतान् कृत्वा स १६
अयाह्व तथा प्रेरित इति तेषां नाम चकार।

ततःपरं स तैः सह पर्व्वतादवरुह्य उपत्यकायां तस्थौ ततस्तस्य शिष्य- १७
सङ्घ, एवं यिहूदादेशाद् यिरूशालमश्च सोरः सीदोनश्च जलधे रोधसो
जननिवहा एत्य तस्य कथाश्रवणार्थं रोगमुक्त्यर्थञ्च तस्य समीपे तस्थुः। १८
एवममेध्यभूतग्रस्ताश्च तन्निकटमागत्य स्वास्थ्यं प्रापुः। एवं सर्व्वेषां स्वास्थ्य- १९
करणप्रभावस्य प्रकाशितत्वात् सर्व्वे लोका एत्य तं स्प्रष्टुं येतिरे।

पश्चात् स शिष्यान् प्रति दृष्टिं कृत्वा जगाद हे दरिद्रा यूयं धन्या यत २०
ईश्वरीये राज्ये वोऽधिकारोस्ति। हे अधुना क्षुधितलोका यूयं धन्या २१

यतो यूयं तर्प्स्यथ। हे इह रोदिनो जना यूयं धन्या यतो यूयं हसिष्यथ।
२२ यदा लोका मनुष्यसूनो र्नामहेतो र्युष्मान् ऋतीयिष्यन्ते तथा पृथक्
कृत्वा निन्दिष्यन्ति किञ्च अधमानिव युष्मान् स्वसमीपाद् दूरीकरिष्यन्ति
२३ तदा यूयं धन्याः। स्वर्गे युष्माकं यथेष्टं फलं भविष्यति, एतदर्थं तस्मिन्
दिने प्रोल्लसत किञ्च आनन्देन नृत्यत; तेषां पूर्व्वपुरुषाश्च भविष्यद्वादिनः
२४ प्रति तथैव व्यवाहरन्। किन्तु हा हा धनवन्तो यूयं सुखं प्राप्नुत। हन्त
२५ परितृप्ता यूयं क्षुधिता भविष्यथ; इह हसन्तो यूयं वत युष्माभिः शोचितव्यं
२६ रोदितव्यञ्च। सर्व्वलोकै र्युष्माकं सुख्यातौ कृतायां युष्माकं दुर्गति र्भवि-
ष्यति युष्माकं पूर्व्वपुरुषा मृषाभविष्यद्वादिनः प्रति तद्वत् कृतवन्तः।
२७ हे श्रोतारो युष्मभ्यमहं कथयामि यूयं शत्रुषु प्रीयध्वं ये च युष्मान्
२८ द्विषन्ति तेषामपि हितं कुरुत। ये च युष्मान् शपन्ति तेभ्य आशिषं दत्त ये
२९ च युष्मान् अवमन्यन्ते तेषां मङ्गलं प्रार्थयध्वं। अपरञ्च यदि कश्चित् तव
कपोले चपेटाघातं करोति तर्हि तं प्रति कपोलम् अन्यं परावर्त्त्य सम्मुखी-
कुरु पुनश्च यदि कश्चित् तव गात्रीयवस्त्रं हरति तर्हि तं परिधेयवस्त्रम्
३० अपि ग्रहीतुं मा वारय। यस्त्वां याचते तस्मै देहि, एवं यस्तव
३१ सम्पत्तिं हरति तं मा याचस्व। अपरञ्च परेभ्यः स्वान् प्रति यथाचरणम्
३२ अपेक्षध्वे परान् प्रति यूयमपि तथाचरत। यतो ये जना युष्मासु प्रीयन्ते
केवलं तेषु प्रीयमाणेषु युष्माकं किं फलं? पापिलोका अपि स्वेषु प्रीय-
३३ माणेषु प्रीयन्ते। अपरञ्च यदि हितकारिण एव हितं कुरुथ तर्हि युष्माकं
३४ किं फलं? पापिलोका अपि तथा कुर्व्वन्ति। एवं येभ्य ऋणपरिशोधस्य
प्राप्तिप्रत्याशास्ते केवलं तेषु ऋणे समर्पिते युष्माकं किं फलं? पुनः प्राप्त्या-
३५ शया पापिलोका अपि जनेषु ऋणम् अर्पयन्ति। अतोहेतो र्यूयं रिपुष्वपि
प्रीयध्वं तथा परहितं कुरुत, एवं पुनः प्राप्त्याशां त्यक्त्वा ऋणमर्पयत तथा
कृते युष्माकं महाफलं भविष्यति; एवं सर्व्वप्रधानस्य सन्तानादिति प्रतीतिं
३६ प्राप्स्यथ यतो हेतो र्युष्माकं पिता कृतघ्नानां दुष्टानाञ्च हितमाचरति। अत एव
स यथा दयालु र्यूयमपि तादृशा दयालवो भवत।

अपरञ्च परान् दोषिणो मा कुरुत तस्माद् यूयं दोषीकृता न भवि- ३७
ष्यथ; एवमदण्ड्यान् मादण्डयत तस्माद् यूयमपि दण्डं न प्राप्स्यथ
परेषां दोषान् क्षमध्वं तस्माद् युष्माकमपि दोषाः क्षमिष्यन्ते। दानानि ३८
दत्त तस्माद् यूयं दानानि प्राप्स्यथ वरञ्च लोकाः परिमाणपात्रं प्रदलय्य
सञ्चाल्य प्रोञ्चाल्य परिपूर्य्य युष्माकं क्रोडेषु समर्पयिष्यन्ति; यूयं येन परिमाणेन
परिमाथ तेनैव परिमाणेन युष्मत्कृते परिमास्यते।

अथ स तेभ्यो दृष्टान्तकथामकथयद् अन्धो जनः किमन्धं पन्थानं दर्शयितुं ३९
शक्नोति? तस्माद् उभावपि किं गर्त्ते न पतिष्यतः? गुरोः शिष्यो न श्रेष्ठः ४०
किन्तु शिष्ये सिद्धे सति स गुरुतुल्यो भवितुं शक्नोति। अपरञ्च त्वं स्वचक्षुषि ४१
नासाम् अदृष्ट्वा तव भ्रातुश्चक्षुषि यत्तृणोस्ति तदेव कुतः पश्यसि? अप- ४२
रञ्च स्वचक्षुषि या नासा विद्यते ताम् अज्ञात्वा, एहि भ्रातस्तव नेत्रात् तृणं
वहिः करोमीति वाक्यं भ्रातरं कथं वक्तुं शक्ष्यसि? हे कपटिन् स्वनयनात्
पूर्व्वं नासां वहिः कुरु ततो भ्रातुश्चक्षुषस्तृणं वहिः कर्त्तुं सुदृष्टिं प्राप्स्यसि।
अन्यच्च उत्तमस्तरुः कदापि फलमनुत्तमं न फलति, अनुत्तमतरुश्च ४३
फलमुत्तमं न फलति कारणादतः फलैस्तरवो ज्ञायन्ते। कण्टकिपाद- ४४
पात् कोपि उडुम्बरफलानि न पातयति तथा शृगालकोलिवृक्षादपि
कोपि द्राक्षाफलं न पातयति। तद्वत् साधुलोकोन्तःकरणरूपात् सुभाण्डा- ४५
गाराद् उत्तमानि द्रव्याणि वहिः करोति, एवं दुष्टो लोकोऽन्तःकरण-
रूपात् कुभाण्डागारात् कुत्सितानि द्रव्याणि निर्गमयति यतोऽन्तःकर-
णानां पूर्णभावानुरूपाणि वचांसि मुखान्निर्गच्छन्ति।

अपरञ्च ममाज्ञानुरूपं नाचरित्वा कुतो मां प्रभो प्रभो इति वदथ? यः ४६
कश्चिन् मम निकटम् आगत्य मम कथा निशम्य तदनुरूपं कर्म्म करोति स ४७
कस्य सदृशो भवति तदहं युष्मान् ज्ञापयामि। यो जनो गभीरं खनित्वा ४८
पाषाणस्थले भित्तिं निर्म्माय स्वगृहं रचयति तेन सह तस्योपमा भवति;
यत आप्लाविजलमेत्य तस्य मूले वेगेन वहदपि तद्गृहं लाडयितुं न शक्नोति
यतस्तस्य भित्तिः पाषाणोपरि तिष्ठति। किन्तु यः कश्चिन् मम कथा ४९

श्रुत्वा तदनुरूपं नाचरति स भित्तिं विना मृत्तिकोपरि गृहनिर्म्माता
४९ समानो भवति; यत आप्लाविजलमागत्य वेगेन यदा वहति तदा
तद्गृहं पतति तस्य महत् पतनं जायते।

---

### ७ सप्तमोऽध्यायः।

शतसेनापते र्दासस्यास्वास्थ्यादारोग्यकरणं ११ विधवाया मृतपुत्रस्य जीवनं १८ योहनो
ख्रीष्टवार्त्ता २४ योहनि ख्रीष्टसाक्ष्यं ३६ दुष्टनार्य्याः पापमार्जनञ्च।

१ ततःपरं स लोकानां कर्णगोचरे तान् सर्व्वान् उपदेशान् समाप्य यदा
२ कफर्नाहूम् पुरं प्रविशति तदा शतसेनापतेः प्रियदास एको मृतकल्पः
३ पीडित आसीत्। अतोहेतोः सेनापति र्यीशो र्वार्त्तां निशम्य दासस्यारोग्य
करणाय तस्यागमनार्थं विनयकरणाय यिहूदीयान् कियतः प्राचः प्रेष-
४ यामास। ते यीशोरन्तिकं गत्वा विनयातिशयं वक्तुमारेभिरे स सेनापति
५ र्भवतोनुग्रहं प्राप्तुम् अर्हति। यतः सोस्माकम् एतद्देशीयजनेषु प्रीयते तथास्मत
६ कृते भजनगेहमेकं निर्म्मितवान्। तस्माद् यीशुस्तैः सह गत्वा निवेशनस्य
समीपं प्राप तदा स शतसेनापति र्वक्ष्यमाणवाक्यं तं वक्तुं बन्धून् प्राहिणोत्।
७ हे प्रभो स्वयं श्रमो न कर्त्तव्यो यद् भवता मद्गेहमध्ये पादार्पणं क्रियेत
तदप्यहं नार्हामि किञ्चाहं भवत्समीपं यातुमपि नात्मानं योग्यं बुद्धवान्
८ ततो भवान् वाक्यमात्रं वदतु तेनैव मम दासः स्वस्थो भविष्यति। यस्माद्
अहं पराधीनोपि ममाधीना याः सेनाः सन्ति तासाम् एकजनं प्रति याहीति
मया प्रोक्ते स याति तदन्यं प्रति आयाहीति प्रोक्ते स आयाति तथा निज-
९ दासं प्रति एतत् कुर्व्विति प्रोक्ते स तदेव करोति। यीशुरिदं वाक्यं श्रुत्वा
विस्मयं ययौ, एवं मुखं परावर्त्त्य पश्चाद्वर्त्तिनो लोकान् बभाषे युष्मानहं
१० वदामि इस्रायेलो वंशमध्येपि विश्वासमीदृशं न प्राप्नवं। ततस्ते प्रेषिता गृहं
गत्वा तं पीडितं दासं स्वस्थं ददृशुः।

११ परेऽहनि स नायीनाख्यं नगरं जगाम किञ्च तस्यानेके शिष्या अन्ये च
१२ लोकास्तेन सार्द्धं ययुः। अपरञ्च तन्नगरस्य द्वारसन्निधिं प्राप्तेषु तेषु
कियन्तो लोका एकं मृतमनुजं वहन्तो नगरस्य बहिर्यान्ति स तन्मातुरेक-

पुत्रस्तन्माता च विधवा; तया सार्द्धं तन्नगरीया बहवो लोका आसन्।
प्रभुस्तां विलोक्य सानुकम्पः कथयामास मा रोदीः। एवं स समीपमित्वा १३
खट्वां पस्पर्श तस्माद् वाहकाः स्थगितास्तस्थुः; तदा स उवाच हे युवमनुष्य १४
त्वमुत्तिष्ठ त्वामहम् आज्ञापयामि। तस्मात् स मृतो जनस्तत्क्षणमुत्थाय १५
कथां प्रकथितः; ततो यीशुस्तस्य मातरि तं समर्पयामास। तस्मात् १६
सर्व्वे लोकाः शशङ्किरे; अपरञ्च मध्ये ऽस्माकम् एको महाभविष्यद्वादी
समुदैत्, एवम् ईश्वरः स्वलोकानन्वगृह्णात् कथामिमां कथयित्वा ईश्वरं
धन्यं जगदुः। ततःपरं समस्तं यिहूदादेशं तस्य चतुर्दिक्स्थदेशञ्च तस्यैतत् १७
कीर्त्ति र्व्याप्नोत्।

ततःपरं योहनः शिष्येषु तं तद्वृत्तान्तं ज्ञापितवत्सु स स्वशिष्याणां द्वौ जनाव् १८
आहूय यीशुं प्रति वक्ष्यमाणं वाक्यं वक्तुं प्रेषयामास, यस्यागमनम् अपेक्ष्य १९
तिष्ठामो वयं किं स एव जनस्त्वं? किं वयमन्यमपेक्ष्य स्थास्यामः? पश्चात्तौ २०
मानवौ गत्वा कथयामासतु र्यस्यागमनम् अपेक्ष्य तिष्ठामो वयं किं स एव जनः
त्वं? किं वयमन्यमपेक्ष्य स्थास्यामः? कथामिमां तुभ्यं कथयितुं योहन् मज्जक
आवां प्रेषितवान्। तस्मिन् दण्डे यीशू रोगिनो महाव्याधिमतो दुष्टभूत- २१
ग्रस्तांश्च बहून् स्वस्थान् कृत्वा, अनेकान्धेभ्यश्चक्षूंषि दत्त्वा प्रत्युवाच, युवां व्रजतम् २२
अन्धा नेत्राणि खञ्जाश्चरणानि च प्राप्नुवन्ति किञ्च कुष्ठिनः परिष्क्रियन्ते
बधिराः श्रवणानि मृताश्च जीवनानि प्राप्नुवन्ति दरिद्राणां समीपेषु सुसं-
वादः प्रचार्य्यते, एवं यं प्रति विघ्नस्वरूपोहं न भवामि स धन्य, एतानि २३
यानि पश्यथः शृणुथश्च तानि योहनं ज्ञापयतम्।

तयोर्दूतयोर्गतयोः सतो र्योहनि स लोकान् वक्तुमुपचक्रमे यूयं मध्येप्रान्तरं २४
किं द्रष्टुं निरगमत? किं वायुना कम्पितं नडं? यूयं किं द्रष्टुं निरगमत? २५
किं सूक्ष्मवस्त्रपरिधायिनं कमपि नरं? किन्तु ये सूक्ष्ममृदुवस्त्राणि परि-
दधति सुत्तमानि द्रव्याणि भुञ्जते च ते राजधानीषु तिष्ठन्ति। तर्हि २६
यूयं किं द्रष्टुं निरगमत? किमेकं भविष्यद्वादिनं? तदेव सत्यं किन्तु स
पुमान् भविष्यद्वादिनोपि श्रेष्ठ इत्यहं युष्मान् वदामि;

२७ 'पश्य स्वकीयदूतन्तु तवाग्रे प्रेषयाम्यहं।
गत्वा त्वदीयमार्गन्तु स हि परिष्करिष्यति।'
२८ यदर्थे लिपिरियम् आस्ते स एव योहन्। अतोहेतो र्युष्मानहं वदामि
स्त्रिया गर्ब्भजातानां भविष्यद्वादिनां मध्ये योहनो मज्जकात् श्रेष्ठः कोपि
नास्ति तथापि ईश्वरीये राज्ये यः सर्व्वस्मात् क्षुद्रः स योहनोपि श्रेष्ठः।
२९ अपरञ्च सर्व्वे लोकाः करमञ्चायिनस्च तस्य वाक्यानि श्रुत्वा योहना मज्जनेन
३० मज्जिताः परमेश्वरं निर्दोषं मेनिरे। किन्तु फिरूशिनो व्यवस्थापकाश्च तेन
३१ न मज्जिताः स्वान् प्रतीश्वरस्योपदेशं निष्फलम् अकुर्व्वन्। अथ प्रभुः कथ-
यामास, इदानीन्तनजनान् केनोपमामि? ते कस्य सदृशाः? ये बालका
३२ विपण्याम् उपविश्य परस्परं आहूय वाक्यमिदं वदन्ति वयं युष्माकं
निकटे वंशीरवादिष्म किन्तु यूयं नारोदिष्ट, बालकैरेतादृशैस्तेषाम् उपमा
३३ भवति। यतो योहन् मज्जक आगत्य पूपं नाखादत् द्राक्षारसञ्च नापिवत्
३४ तस्माद् यूयं वदथ भूतग्रस्तोयम्। ततःपरं मानवसुत आगत्याखादद्पिवञ्च
तस्माद् यूयं वदथ खादकः सुरापश्चण्डालपापिनां बन्धुरेको जनो दृश्य-
३५ ताम्। किन्तु ज्ञानिनो ज्ञानं निर्दोषं विदुः।
३६ पश्चादेकः फिरूशी यीशुं भोजनाय न्यमन्त्रयत् ततः स तस्य गृहं गत्वा
भोक्तुमुपविष्टः। एतर्हि तत् फिरूशिनो गृहे यीशु र्भोक्तुम् उपावेक्षीत् तच्छ्रुत्वा
तन्नगरवासिनी कापि दुष्टा नारी पाण्डरप्रस्तरस्य सम्पुटके सुगन्धितैलम्
३७ आनीय तस्य पश्चात् पादयोः सन्निधौ तस्थौ किञ्च रुदती नेत्राम्बुभि-
३८ स्तस्य चरणौ प्रक्षाल्य निजकचैरमार्क्षीत् ततस्तस्य चरणौ चुम्बित्वा तेन
३९ सुगन्धितैलेन ममर्द। तस्मात् स निमन्त्रयिता फिरूशी मनसा चिन्तया-
मास यद्ययं भविष्यद्वादी भवेत् तर्हि एनं स्पृशति या स्त्री सा का कीदृशी
४० चेति ज्ञातुं शक्नुयात् यतः सा दुष्टा। तदा यीशुस्तं जगाद हे
शिमोन् त्वां प्रति मम किञ्चिद् वक्तव्यमस्ति; तस्मात् स बभाषे हे गुरो तद्
४१ वदतु। एकोत्तमर्णस्य द्वावधमर्णौ आस्तां तयोरेकः पञ्च शतानि मुद्रा-
४२ पादान् अपरश्च पञ्चाशत् मुद्रापादान् धारयामास। तदनन्तरं तयोः

शोध्याभावात् स उत्तमर्णस्तयो र्द्वयो र्ऋणे चक्षमे; तस्मात् तयोर्द्वयोः कस्तस्मिन्
प्रेष्यते बहु? तद् ब्रूहि। शिमोन् प्रत्युवाच मया बुध्यते यस्याधिकम् ऋणं ४३
चक्षमे स इति; ततो यीशुस्तं व्याजहार त्वं यथार्थं व्यचारयः। अथ तां ४४
नारीं प्रति व्याघुट्य शिमोनमवोचत् स्त्रीमिमां पश्यसि? तव गृहे मय्यागते
त्वं पादप्रक्षालनार्थं जलं नादाः किन्तु योषिदेषा नयनजलै र्मम पादौ
प्रक्षाल्य केशैरमार्क्षीत्। एवं त्वं मां नाचुम्बीः किन्तु योषिदेषा स्वीयागमना- ४५
दारभ्य मदीयपादौ चुम्बितुं न व्यरंस्त। अपरञ्च त्वं मदीयोत्तमाङ्गे कि- ४६
ञ्चिदपि तैलं नामर्दीः किन्तु योषिदेषा मम चरणौ सुगन्धितैलेनामर्द्दीत्।
अतस्त्वां व्याहरामि, एतस्या बहु पापमक्षम्यत ततो हेतो र्बहु प्रीयते किन्तु ४७
यस्याल्पपापं क्षम्यते सोल्पं प्रीयते। ततःपरं स तां बभाषे त्वदीयं पापमक्ष- ४८
म्यत। तदा तेन सार्द्धं ये भोक्तुम् उपविविशुस्ते परस्परं वक्तुमारेभिरे ४९
अयं पापं क्षमते कएषः? किन्तु स तां नारीं जगाद तव विश्वासस्त्वां पर्य्य- ५०
त्रास्त त्वं क्षेमेण व्रज।

---

८ अष्टमोध्यायः।

१ नगरेषु खीष्टस्य भ्रमणं ४ वीजवपनस्य दृष्टान्तकथा ९ तस्या तात्पर्य्यं १६ प्रदीप-
दृष्टान्तः १९ कुटुम्बलक्षणं २२ वायोस्तम्भनं २६ भूतानां त्याजनं ४० खीष्टस्य
पाल्मर्त्तं ४१ प्रदररोगिण्या आरोग्यकरणं ४९ अधिपतर्म्मृतकन्यायै जीवनदानञ्च।

अपरञ्च यीशु र्द्वादशभिः शिष्यैः सार्द्धं नानानगरेषु नानाग्रामेषु च १
भ्राम्यन् ईश्वरीयराजत्वस्य सुसंवादं प्रचारयितुं प्रारेभे। तदा मग्द- २
लिनीतिविख्याता मरियम् यस्याः सप्त भूता निरगच्छन् हेरोद्राजस्य
गृहाधिपतेः कुषाभार्य्या योहना च शूशाना च दुष्टभूतेभ्यो रोगेभ्यश्च ३
मुक्ताः अन्या बह्व्यः स्त्रियश्च निजविभूती र्व्ययित्वा तमसेवन्त ताः सर्व्वास्तेन
सार्द्धम् आसन्।

अनन्तरं नानानगरेभ्यो बहवो लोका आगत्य तस्य समीपेऽमिलन्त ४
तदा स तेभ्य एकां दृष्टान्तकथां कथयामास। एकः कृषीवलो वीजानि ५
वप्तुं वहिर्जगाम ततो वपनकाले कतिपयानि वीजानि मार्गपार्श्वे पेतुः
ततस्तानि पदतलै र्दलितानि पक्षिभि र्भक्षितानि च। किञ्च कतिपयानि ६

वीजानि पाषाणस्थले पतितानि यद्यपि तान्यङ्कुरितानि तथापि रसा-
७ भावात् शुशुषुः। अपरञ्च कतिपयानि वीजानि कण्टकिवनमध्ये पति-
८ तानि ततः कण्टकिवनानि संवृद्ध्य तानि जग्रसुः। तदन्यानि कतिपयवी-
जानि भूम्यामुत्तमायां पेतुस्ततस्तान्यङ्कुरयित्वा शतगुणानि फलानि फेलुः।
स इमां कथां कथयित्वा प्रोच्चैः प्रोवाच यस्य श्रोतुं श्रोत्रे स्तः स शृणोतु।
९ ततःपरं शिष्यास्तं पप्रच्छुरस्य दृष्टान्तस्य किं तात्पर्य्यं? ततः स व्याज-
१० हार ईश्वरीयराज्यस्य निगूढार्थं ज्ञातुं युष्मभ्यमधिकारो दीयते किन्त्वन्ये
यथा दृष्ट्वापि न पश्यन्ति श्रुत्वापि न बुध्यन्ते च तदर्थं तेषां पुरस्तात
११ ताः सर्व्वाः कथा दृष्टान्तेन कथ्यन्ते। दृष्टान्तस्यास्याभिप्राय, ईश्व-
१२ रीयकथा वीजस्वरूपा। ये कथामात्रं शृण्वन्ति किन्तु पश्चाद् विश्वस्य यथा
परित्राणं न प्राप्नुवन्ति तदाशयेन शैतानेत्य हृदयात् तां कथाम् अप-
१३ हरति त एव मार्गपार्श्वस्थभूमिस्वरूपाः। ये कथां श्रुत्वा सानन्दं
गृह्णन्ति किन्त्वबद्धमूलत्वात् स्वल्पकालमात्रं प्रतीत्य परीक्षाकाले भ्रश्यन्ति
१४ त एव पाषाणभूमिस्वरूपाः। अपरञ्च ये कथां श्रुत्वा यान्ति किञ्च विषय-
चिन्तया धनलोभेन च ऐहिकसुखे मज्जन्त उपयुक्तफलानि न फलन्ति
१५ त एवोप्तवीजकण्टकिभूस्वरूपाः। किन्तु ये श्रुत्वा सरलैः शुद्धैश्चान्तःकरणैः
कथां गृह्णन्ति किञ्च धैर्य्यम् अवलम्ब्य फलान्युत्पादयन्ति त एवोत्तम-
मृत्स्वरूपाः।

१६ अपरञ्च प्रदीपं प्रज्वाल्य पात्रेण नाच्छादयति कोपि तथा खट्वाधोपि
न स्थापयति किन्तु दीपाधारोपर्य्येव स्थापयति तस्मात् प्रवेशका दीप्तिं
१७ पश्यन्ति। यन्न प्रकाशयिष्यते तादृग् अप्रकाशितं वस्तु किमपि नास्ति यच्च
१८ न सुव्यक्तं प्रचारयिष्यते तादृक् गुप्तं वस्तु किमपि नास्ति। अतोहेतो यूयं
केन प्रकारेण शृणुथ तत्र सावधाना भवत यस्य समीपे वर्द्धते तस्मै पुन-
र्दास्यते किन्तु यस्याश्रये न वर्द्धते तस्य बोधे यद्यदस्ति तदपि तस्मात् नेष्यते।
१९ अपरञ्च यीशो र्माता भ्रातरश्च तस्य समीपं जिगमिषवः किन्तु
२० जनतासम्बाधात् तत्सन्निधिं प्राप्तुं न शेकुः। तत्पश्चात् तव माता भ्रातरश्च

त्वां साक्षात् चिकीर्षन्तो बहिस्तिष्ठन्तीति वार्त्तायां तस्मै कथितायां स २१
प्रत्युवाच ये जना ईश्वरीयकथां श्रुत्वा तदनुरूपमाचरन्ति तएव मम
माता भ्रातरश्च।

अनन्तरं एकदा यीशुः शिष्यैः सार्द्धं नावमारुह्य जगाद, आयात वयं २२
ह्रदस्य पारं यामः; ततस्ते जग्मुः। तेषु नौकां वाहयत्सु स निदद्रौ; अथाकस्मात् २३
प्रबलझञ्भ्रागमात् ह्रदे नौकायां तरङ्गैराच्छन्नायां विपत् तान् जग्रास।
तस्माद् यीशोरन्तिकं गत्वा हे गुरो हे गुरो प्राणा नो यान्तीति गदित्वा २४
तं जागरयाम्बभूवुः; तदा स उत्थाय वायुं तरङ्गांश्च तर्जयामास तस्मादुभौ
निवृत्य स्थिरौ बभूवतुः। किन्तु स तान् बभाषे युष्माकं विश्वासः क? तस्मात्ते २५
भीता विस्मिताश्च परस्परं जगदुः, अहो कीदृगयं मनुजः पवनं पानीयञ्च
दिशति तदुभयं तदादेशं वहति।

ततःपरं गालील्प्रदेशस्य सम्मुखस्थगिदेरीयप्रदेशे नौकायां लगन्त्यां २६
तस्य तटस्यावरोहमात्राद् बहुतिथकालं भूतग्रस्त एको मानुषः पुरादागत्य
तं साक्षाच्चकार। स मानुषो वासो न परिदधौ गृहे न वसन् केवलं श्मशानम् २७
अध्युवास। स यीशुं दृष्ट्वैव चीच्छब्दं चकार तस्य सम्मुखे पतित्वा प्रोच्चै- २८
र्जगाद च हे सर्व्वप्रधानेश्वरस्य पुत्त्र मया सह तव कः सम्बन्धः? त्वयि विनयं
करोमि मां मा यातय। यतः स तं मानुषं त्यक्त्वा यातुम् अमेध्यभूतम् २९
आदिदेश; स भूतस्तं मानुषम् असकृद् दधार तस्माल्लोकाः शृङ्खलेन निग-
डेन च बबन्धुः; स तद् भङ्क्त्वा भूतवशत्वात् मध्येप्रान्तरं ययौ। अनन्तरं ३०
यीशुस्तं पप्रच्छ तव किन्नाम? स उवाच मम नाम बाहिनो यतोहेतो
र्बहवो भूतास्तमाशिश्रियुः। अथ भूता विनयेन जगदुः गभीरं गर्त्तं ३१
गन्तुमाज्ञापयास्मान्। तदा पर्व्वतोपरि वराहव्रजश्चरति तस्माद् भूता ३२
विनयेन प्रोचुः, अमुं वराहव्रजम् आश्रयितुम् अस्मान् अनुजानीहि; ततः
सोनुजज्ञौ। ततःपरं भूतास्तं मानुषं विहाय वराहव्रजम् आशिश्रियुः ३३
वराहव्रजश्च तत्क्षणात् कटकेन धावन्तो ह्रदे प्राणान् विजह्रुः। तद् ३४
दृष्ट्वा शूकररक्षकाः पलायमाना नगरं ग्रामञ्च गत्वा तत्सर्व्ववृत्तान्तं

३५ कथयामासुः। ततः किं वृत्तम् एतद्दर्शनार्थं लोका निर्गत्य यीशोः समीपं
ययुः, एवं तं मानुषं त्यक्तभूतं परिहितवस्त्रं स्वस्थमानुषवत् यीशोश्चरण-
३६ सन्निधौ समुपविशन्तं विलोक्य बिभ्युः। किन्तु ये लोकास्तस्य भूतग्रस्तस्य
३७ स्वास्थ्यकरणं ददृशुस्ते तेभ्यः सर्व्ववृत्तान्तं कथयामासुः। तदनन्तरं तस्य
गिदेरीयप्रदेशस्य चतुर्दिक्स्था बहवो जना अतित्रस्ता विनयेन तं जगदुः
भवान् अस्माकं निकटाद् व्रजतु तस्मात् स नावमारुह्य ततो व्याघुट्य
३८ जगाम। तदानीं त्यक्तभूतमनुजस्तेन सह स्थातुं प्रार्थयाञ्चक्रे किन्तु त्वदर्थम्
ईश्वरः कीदृङ् महाकर्म्म कृतवान् इति निवेशनं गत्वा विज्ञापय यीशुः
३९ कथामेतां कथयित्वा तं विससर्ज। ततः स व्रजित्वा यीशुस्तदर्थं यन्महाकर्म्म
चकार तत् पुरस्य सर्व्वत्र प्रकाशयितुं प्रारेभे।

४० अथ यीशौ परावृत्यागते लोकास्तं आदरेण जगृहु र्यस्मात्ते सर्व्वे
तमपेक्षाञ्चक्रिरे।

४१ तदनन्तरं यायीर्नाम्ना भजनगेहस्यैकोऽधिप आगत्य यीशोश्चरणयोः
पतित्वा स्वनिवेशनागमनार्थं तस्मिन् विनयं चकार यतस्तस्य द्वादशवर्ष-
४२ वयस्का कन्यैकासीत् सा मृतकल्पाभवत्। ततस्तस्य गमनकाले मार्गे
४३ लोकानां महान् समागमो बभूव। एवं द्वादशवर्षाणि प्रदररोगग्रस्ता नाना
वैद्यैश्चिकित्सां कृत्वा सर्व्वस्वं व्ययित्वापि स्वास्थ्यं न प्राप्ता या योषित् सा
४४ यीशोः पश्चादागत्य तस्य वस्त्रग्रन्थिं पस्पर्श। तस्मात् तत्क्षणात् तस्या रक्त-
४५ स्रावो रुद्धः। तदानीं यीशुरवदत् केनाहं स्पृष्टः? ततोऽनेकैरनङ्गीकृते
पितरस्तस्य सङ्गिनश्चावदन् हे गुरो लोकास्तव देहे घर्षित्वा पतन्ति तथापि
४६ केनाहं स्पृष्टइति भवान् कुतः पृच्छति? यीशुः कथयामास केनाप्यहं स्पृष्टो
४७ यतो मत्तः शक्ति र्निर्गतेति मया निश्चितमज्ञायि। तदा सा नारी स्वयं न
गुप्तेति विदित्वा कम्पमाना सती तस्य सम्मुखे पपात किञ्च केन निमित्तेन
तं पस्पर्श स्पर्शमात्राच्च येन प्रकारेण स्वस्थाभवत् तत् सर्व्वं तस्य साक्षादा-
४८ चख्यौ। ततः स तां जगाद हे कन्ये सुस्थिरा भव तव विश्वासस्त्वां स्वस्थाम
४९ अकार्षीत् त्वं क्षेमेण याहि।

यीशोरेतद्वाक्यवदनकाले तस्याधिपते र्निवेशनात् कश्चिल्लोक आगत्य
तं बभाषे तव कन्या मृता गुरुं मा क्लिश्नान। किन्तु यीशुस्तदाकर्ण्या- ५०
धिपतिं व्याजहार मा भैषी: केवलं विश्वसिहि तस्मात् सा जीविष्यति।
अथ तस्मिन् तस्य निवेशनं प्राप्ते विना पितरं याकुवञ्च कन्याया मातरं ५१
पितरञ्च, अन्यं प्रवेष्टुं वारयामास। अपरञ्च ये रुदन्ति विलपन्ति च तान् ५२
सर्व्वान् जनान् उवाच यूयं मा रोदिष्ट कन्या न मृता निद्राति। किन्तु
सा निश्चितं मृतेति ज्ञात्वा ते तमुपजहसुः। पश्चात् स सर्व्वान् बहिः कृत्वा ५३
कन्यायाः करौ धृत्वाजुहुवे, हे कन्ये त्वमुत्तिष्ठ तस्मात् तस्याः प्राणेषु पुन- ५४
रागतेषु सा तत्क्षणाद् उत्तस्थौ। तदानीं तस्यै किञ्चित् भक्ष्यं दातुम् ५५
आदिदेश। ततस्तस्याः पितरौ विस्मयं गतौ किन्तु स तानादिदेश घट- ५६
नाया एतस्याः कथां कस्मैचिदपि मा कथयत।

---

## ९ नवमोऽध्यायः।

१ शिष्याणां प्रेषणं ७ खीष्टं द्रष्टुं हेरोद इच्छा १० पञ्चपूपैर्मत्स्याभ्यां च पञ्चसहस्रपुंभोजनं १८ खीष्टस्य निर्णयः २३ खीष्टस्योपदेशः २८ तेन मूर्त्त्यन्तरधारणं ३७ भूतग्रस्तबालकस्य स्वस्थता ४६ नम्रताया उपदेशः ४९ सर्व्वेष्वनुग्रहस्यावश्यकत्वं ५१ शोमिरोणीयैः खीष्टस्य ग्राह्यता ५७ चञ्चललोकान् प्रति खीष्टस्योपदेशकथा च।

ततःपरं स द्वादशशिष्यानाहूय भूतान् त्याजयितुं रोगान् प्रति- १
कर्त्तुञ्च तेभ्यः शक्तिमाधिपत्यञ्च ददौ। अपरञ्च ईश्वरीयराज्यस्य सुसंवादं २
प्रकाशयितुम् एवं रोगिणामारोग्यं कर्त्तुं प्रेरणकाले तान् जगाद। यात्रार्थं ३
यष्टि र्वस्त्रपुटकं भक्ष्यं मुद्रा द्वितीयवस्त्रम् एषां किमपि मा गृह्णीत।
किञ्च यूयं यन्निवेशनं प्रविशथ नगरत्यागपर्य्यन्तं तन्निवेशने तिष्ठत। ४
तत्र यदि केचिल्लोका युष्माकमातिथ्यं न कुर्व्वन्ति तर्हि तस्मान्नगराद् ५
गमनकाले तेषां विरुद्धं साक्ष्यार्थं युष्माकं पदधूलीः सम्पातयत। अथ ते ६
प्रस्थाय सर्व्वत्र सुसंवादं प्रचारयितुं पीडितान् स्वस्थान् कर्त्तुञ्च ग्रामेषु
भ्रमितुं प्रारेभिरे।

एतर्हि हेरोद् राजा यीशोः सर्व्वकर्म्मणां वार्त्तां श्रुत्वा भृशमुद्विविजे ७
यतः केचिदूचु र्योहन् श्मशानादुदतिष्ठत्। केचिदूचुः, एलियो दर्शनं ८

दृष्टवान्; एवमन्यलोका ऊचुः पूर्व्वीयः कश्चिद् भविष्यद्वादी समुत्थितः।
९ किन्तु हेरोदुवाच योहनः शिरोऽहमच्छिनदम् इदानीं यस्येदृक्कर्म्मणो
वार्त्तां प्राप्नोमि स कः? अथ स तं द्रष्टुम् ऐच्छत्।
१० अनन्तरं प्रेरिताः प्रत्यागत्य यानि यानि कर्म्माणि चक्रुस्तानि यीशवे
कथयामासुः; ततः स तान् नीत्वा वैत्सैदानामकनगरस्य विजनं स्थानं गुप्तं
११ जगाम। पश्चाल् लोकास्तद् विदित्वा तस्य पश्चाद् ययुः; ततः स तान् नयन्
ईश्वरीयराज्यस्य प्रसङ्गमुक्तवान् एवं येषां चिकित्सया प्रयोजनम् आसीत्
१२ तान् स्वस्थान् चकार। अपरञ्च दिवावसन्ने सति द्वादशशिष्या यीशोरन्ति-
कम् एत्य कथयामासुः, वयमत्र काननस्थाने तिष्ठामः, ततो हेतो र्नगरं
ग्रामञ्च गत्वा वासस्थानं प्राप्य भक्ष्यद्रव्याणि क्रेतुं जननिवहं विसृजतु।
१३ तदा स उवाच यूयमेव तान् भोजयध्वं; ततस्ते प्रोचुरस्माकं निकटे केवलं
पञ्च पूपा द्वौ मत्स्यौ च विद्यन्ते, अतएव स्थानान्तरम् इत्वा निमित्तमेतेषां
१४ भक्ष्यद्रव्येषु न क्रीतेषु न भवति। तत्र प्रायेण पञ्चसहस्राणि पुरुषा
१५ आसन्। तदा स शिष्यान् जगाद पञ्चाशत् पञ्चाशज्जनैः पंक्तीः कृत्वा
१६ तानुपवेशयत तस्मात् ते तदनुसारेण सर्व्वलोकानुपवेशयामासुः। ततः स
तान् पञ्च पूपान् मीनद्वयञ्च गृहीत्वा स्वर्गं विलोक्येश्वरगुणान् कीर्त्तया-
१७ ञ्चक्रे किञ्च भङ्क्त्वा लोकेभ्यः परिवेषणार्थं शिष्येषु समर्पयाम्बभूव। ततः
सर्व्वे भुक्त्वा तृप्तिं गता एवम् अवशिष्टानां द्वादश डलकान् संजगृहुः।
१८ अथैकदा निर्जने शिष्यैः सह प्रार्थनकाले तान् पप्रच्छ लोका मां किं
१९ वदन्ति? ततस्ते प्रोचुः, त्वां योहन् मज्जकं वदन्ति तथा केचित् त्वाम् एलियं
वदन्ति, पूर्व्वकालिकः कश्चिद् भविष्यद्वादी श्मशानाद् उदतिष्ठद् इति
२० केचिद् वदन्ति। तदा स उवाच यूयं मां किं वदथ? ततः पितर उक्तवान्
२१ त्वम् ईश्वराभिषिक्तः पुरुषः। तदा स तान् दृढमादिदेश कथामेतां कस्मैचि-
२२ दपि मा कथयत। स पुनरुवाच मनुष्यपुत्त्रेण बहुयातना भोक्तव्याः किञ्च
प्राचीनलोकैः प्रधानयाजकैरध्यापकैश्च सोवज्ञाय हन्तव्यः किन्तु तृतीय-
दिवसे श्मशानात् तेनोत्थातव्यम्।

अपरं स सर्व्वानुवाच कश्चिद् यदि मम पश्चाद् गन्तुं वाञ्छति तर्हि स स्वं २३
दाम्यतु, एवं दिने दिने क्रुशं गृहीत्वा मम पश्चादागच्छतु। यतो यः कश्चित् २४
स्वप्राणान् रिरक्षिषति स तान् हारयिष्यति यः कश्चिन् मदर्थं प्राणान्
हारयिष्यति स तान् रक्षिष्यति। कश्चिद् यदि सर्व्वं जगत् प्राप्नोति किन्तु २५
स्वप्राणान् हारयति स्वयं विनश्यति च तर्हि तस्य को लाभः? पुन र्यः २६
कश्चिन् मां मम वाक्यं वा लज्जास्पदं जानाति मनुष्यपुत्रो यदा स्वस्य
पितुश्च पवित्राणां दूतानाञ्च तेजोभिः परिवेष्टित आगमिष्यति तदा सोपि
तं लज्जास्पदं ज्ञास्यति। किन्तु युष्मानहं यथार्थं वदामि, ईश्वरीयराजत्वं २७
न दृष्ट्वा मृत्युं नास्वादिष्यन्ते, एतादृशाः कियन्तो लोका अत्रस्थानेऽपि
दण्डायमानाः सन्ति।

एतदाख्यानकथनात् परं प्रायेणाष्टसु दिनेषु गतेषु स पितरं योहनं २८
याकुबञ्च गृहीत्वा प्रार्थयितुं पर्व्वतमेकं समारुरोह। अथ तस्य प्रार्थनकाले २९
तस्य मुखाकृतिरन्यरूपा जाता, एवं तदीयं वस्त्रमुज्ज्वलशुक्लं जातं। अपरञ्च ३०
मूसा एलियश्चोभौ तेजस्विनौ दृष्टौ तौ तेन यिरूशालम्पुरे यो मृत्युः साधि- ३१
ष्यते तदीयां कथां तेन सार्द्धं कथयितुम् आरेभाते। तदा पितरादयस्तस्य ३२
सङ्गिनो निद्रयाकृष्टा आसन् किन्तु जागरित्वा तस्य तेजस्तेन सार्द्धम्
उत्तिष्ठन्तौ तौ जनौ च ददृशुः। अथ तयोरुभयो र्गमनकाले पितरो ३३
यीशुं बभाषे हे गुरोऽस्माकम् स्थानेऽस्मिन् स्थितिः शुभा, ततो हेतोरेका
त्वदर्था, एका मूसार्था, एका एलियार्था, इति तिस्रः कुट्योऽस्माभि र्निर्म्मी-
यन्तां, इमां कथां स न विविच्य कथयामास। अपरञ्च तद्वाक्यवदनकाले ३४
पयोद एक आगत्य तेषामुपरि छायां चकार, ततः शिष्यास्तन्मध्यं प्रविश्य
शशङ्किरे। तदा तस्मात् पयोदाद् इयमाकाशीया वाणी निर्जगाम, ममायं ३५
प्रियः पुत्र एतस्य कथायां मनो निधत्त। इतिशब्दे जाते ते यीशुमेका- ३६
किनं ददृशुः किन्तु ते तदानीं तस्य दर्शनस्य वाचमेकामपि नोक्त्वा मनःसु
स्थापयामासुः।

परेऽहनि तेषु तस्माच्छैलाद् अवरूढेषु तं साक्षात् कर्त्तुं बहवो लोका ३७

३८ आजग्मुः। एवं तेषां मध्याद् एको जन उच्चैरुवाच हे गुरो अहं विनयं करोमि
३९ मम पुत्रं प्रति कृपादृष्टिं करोतु मम स एवैकः पुत्रः। भूतेन धृते स प्रसभं
चीच्छब्दं करोति किञ्च तन्मुखात् फेणा निर्गच्छन्ति, भूत इत्थं विदार्य्य
४० क्लिष्ट्वा प्रायशस्तं न त्यजति। तस्मात् तं भूतं त्याजयितुं तव शिष्यसमीपे
४१ न्यवेदयं किन्तु ते न शेकुः। तदा यीशुरवादीत् रे अविश्वासिन् विपथगा-
मिन् वंश कतिकालान् युष्माभिः सह स्थास्याम्यहं? युष्माकम् आचर-
४२ णानि च सहिष्ये? तव पुत्रमिहानय। ततस्तस्मिन्नागतमात्रे स भूतस्तं
भूमौ पातयित्वा विददार; तदा यीशुस्तममेध्यं भूतं तर्जयित्वा बालकं
४३ स्वस्थं कृत्वा तस्य पितरि समर्पयामास। ईश्वरस्य महाशक्तिम् इमां विलोक्य
सर्व्वे चमच्चक्रुः; इत्थं यीशोः सर्व्वाभिः क्रियाभिः सर्व्वैर्लोकैराश्चर्य्ये मन्यमाने
४४ सति स शिष्यान् बभाषे कथेयं युष्माकं कर्णेषु प्रविशतु मनुष्यपुत्रो मनु-
४५ ष्याणां करेषु समर्पयिष्यते। किन्तु ते तां कथां न बुबुधिरे किञ्च स्पष्टत्वा-
भावात् तस्या अभिप्रायस्तेषां बोधगम्यो न बभूव; तथा तस्याशयः क इत्यपि
ते भयात् प्रष्टुं न शेकुः।

४६ तदनन्तरं तेषां मध्ये कः श्रेष्ठो भविष्यति कथामेतां गृहीत्वा ते मिथो
४७ विवादं चक्रुः। ततो यीशुस्तेषां मनोभिप्रायं विदित्वा बालकमेकं गृहीत्वा
स्वस्य निकटे स्थापयित्वा तान् जगाद, यो जनो मम नाम्नास्य बालकस्या-
४८ तिथ्यं विदधाति स ममातिथ्यं विदधाति यश्च ममातिथ्यं विदधाति स
मम प्रेरकस्यातिथ्यं विदधाति युष्माकं मध्ये यः स्वं सर्व्वस्मात् क्षुद्रं जानीते
स एव श्रेष्ठो भविष्यति।

४९ अपरञ्च योहन् व्याजहार हे प्रभो तव नाम्ना भूतान् त्याजयन्तं मानुषम्
५० एकं दृष्टवन्तो वयं, किन्त्वस्माकम् अपश्चाद्गामित्वात् तं न्यषेधाम। तदानीं
यीशुरुवाच तं मा निषेधत यतो यो जनोस्माकं न विपक्षः स एवास्माकं
सपक्षो भवति।

५१ अनन्तरं तस्यारोहणसमय उपस्थिते स स्थिरचेता यिरूशालमं
५२ प्रति यात्रां कर्त्तुं निश्चित्याग्रे दूतान् प्रेषयामास। तस्मात् ते गत्वा तस्य

प्रयोजनीयद्रव्याणि संग्रहीतुं शोमिरोणीयाणां ग्रामं प्रविविशुः। किन्तु ५३
स यिरूशालमं नगरं याति ततोहेतो लौकास्तस्यातिथ्यं न चक्रुः। अतएव ५४
याकुब्योहनौ तस्य शिष्यौ तद् दृष्ट्वा जगदतुः हे प्रभो एलियो यथा
चकार तथा वयमपि गगणाद् आगन्तुम् एतान् भस्मीकर्त्तुञ्च वह्निमाज्ञा-
पयाम किं? भवान् किमिच्छति? किन्तु स मुखं परावर्त्य तान् तर्जयित्वा ५५
गदितवान् युष्माकं मनोभावः कः, इति यूयं न जानीथ। मनुजसुतो ५६
मनुजानां प्राणान् नाशयितुं नागच्छत् किन्तु रक्षितुम् आगच्छत्। पश्चाद्
इतरग्रामं ते ययुः।

तदनन्तरं पथि गमनकाले जन एकस्तं बभाषे, हे प्रभो भवान् यत्र याति ५७
भवता सहाहमपि तत्र यास्यामि। तदानीं यीशुस्तमुवाच गोमायूनां ५८
गर्त्ता आसते विहायसीयविहगानां नीडानि च सन्ति किन्तु मानव-
तनयस्य शिरः स्थापयितुं स्थानं नास्ति। ततःपरं स इतरजनं जगाद त्वं ५९
मम पश्चाद् एहि; ततः स उवाच हे प्रभो पूर्व्वं पितरं श्मशाने स्थापयितुं
मामादिशतु। तदा यीशुरुवाच मृता मृतान् श्मशाने स्थापयन्तु किन्तु ६०
त्वं गत्वेश्वरीयराजत्वस्य कथाः प्रचारय। ततोन्यः कथयामास हे प्रभो ६१
मयापि भवतः पश्चाद् गंस्यते किन्तु पूर्व्वं मम निवेशनस्य परिजनामाम्
अनुमतिं गृहीत्वा गन्तुम् अहमादिश्यै भवता। तदानीं यीशुस्तं प्रोक्तवान् ६२
यो जनो लाङ्गले करमर्पयित्वा पश्चात् पश्यति स ईश्वरीयराज्यं नार्हति।

---

१० दशमोध्यायः।

१ सप्ततिशिष्याणां निरूपणं प्रेरणञ्च १२ कोरासीनादिनगराणां सन्तापो भविष्यत्
कथा च १७ सप्ततिशिष्यैः सह कथनं २२ शिष्येभ्य आशिर्दानं २५ ख्रीष्टेन व्यवस्था-
पकायोपदेशः ३८ मर्थामरियमो गृहे ख्रीष्टस्यातिथित्वञ्च।

ततःपरं प्रभुरपरान् सप्ततिशिष्यान् नियुज्य स्वयं यानि नगराणि १
यानि स्थानानि च गमिष्यति तानि नगराणि तानि स्थानानि च प्रति
तेषां द्वौ द्वौ जनौ प्रहितवान्। तेभ्यः कथयामास च शस्यानि बहूनीति २
सत्यं किन्तु छेदका अल्पे तस्माद्धेतोः शस्यक्षेत्राय छेदकान् अपरानपि

३ प्रेषयितुं शस्यक्षेत्रस्वामिनं प्रार्थयध्वं। एवं यूयं यात, पश्यत वृकाणां मध्ये
४ मेषशावकानिव युष्मान् प्रहिणोमि। यूयं क्षुद्रं महद् वा वसनसम्पुटकं
५ पादुकाश्च मा गृह्णीत मार्गमध्ये कमपि मा नमत च। अपरञ्च
यूयं यद् यद् निवेशनं प्रविशथ तत्र निवेशनस्यास्य मङ्गलं भूयादिति
६ वाक्यं प्रथमं वदत। तस्मात् तस्मिन् निवेशने यदि मङ्गलपात्रं स्थास्यति
७ तर्हि तन्मङ्गलं तस्य भविष्यति नोचेत् युष्मान् प्रति परावर्त्तिष्यते। अप-
रञ्च ते यत् किञ्चित् दास्यन्ति तदेव भुक्त्वा पीत्वा तस्मिन्निवेशने स्थास्यथ
८ यतः कर्म्मकारिणो जना भृतिम् अर्हन्ति; गृहं गृहं मा यास्यथ। अन्यच्च
युष्मासु किमपि नगरं प्रविष्टेषु लोका यदि युष्माकम् आतिथ्यं करि-
९ ष्यन्ति तर्हि यत् खाद्यम् उपस्थास्यन्ति तदेव खादिष्यथ। एवं तन्नगरस्थान्
रोगिणः स्वस्थान् करिष्यथ किञ्चेश्वरीयं राजत्वं युष्माकम् अन्तिकम्
१० आगमत् कथामेतां प्रचारयिष्यथ। किन्तु किमपि पुरं युष्मासु प्रविष्टेषु
लोका यदि युष्माकम् आतिथ्यं न करिष्यन्ति तर्हि तस्य नगरस्य पन्थानं
११ गत्वा कथामेतां वदिष्यथ, युष्माकं नगरीया या धूलीरस्मासु समलगन् ता
अपि युष्माकं प्रातिकूल्येन साक्ष्यार्थं सम्पातयामः; तथापीश्वरराजत्वं युष्माकं
१२ समीपम् आगमत् इति निश्चितं जानीत। अहं युष्मभ्यं यथार्थं कथयामि
विचारदिने तस्य नगरस्य दशातः सिदोमो दशा सह्या भविष्यति।
१३ 　हा हा कोराशीन् नगर हा हा बैत्सैदानगर युवयोर्मध्ये यादृशम्
आश्चर्य्यं कर्म्म कृतमासीत् तत् सर्व्वं कर्म्म यदि सोरसीदोनोर्नगरयोरकारि-
ष्यत, तदा इतो बहुदिनपूर्व्वं तन्निवासिनः शणवस्त्राणि परिधाय गात्रेषु
१४ भस्म विलिप्य समुपविश्य समखेत्स्यन्। अतो हेतो र्विचारदिवसे युष्माकं
१५ दशातः सोरसीदोन्निवासिनां दशा सह्या भविष्यति। हे कफर्नाहूम् त्वं स्वर्गं
१६ यावद् उन्नमसि किन्तु नरकं यावत् न्यग् भविष्यसि। यो जनो युष्माकं
वाक्यं गृह्णाति स ममैव वाक्यं गृह्णाति किञ्च यो जनो युष्माकम् अवज्ञां
करोति स ममैवावज्ञां करोति यो जनो ममावज्ञां करोति स मत्प्रेरक-
स्यैवावज्ञां करोति।

अथ ते सप्ततिशिष्या आनन्देन प्रत्यागत्य कथयामासुः, हे प्रभो १७
भवतो नाम्ना भूता अस्माकं वशीभवन्ति। तदानीं स तान् जगाद विद्युत- १८
मिव स्वर्गात् पतन्तं शैतानम् अदर्शम्। पश्यत सर्पान् वृश्चिकान् रिपूणां १९
सर्व्वपराक्रमांश्च पदतलै र्दलयितुं युष्मभ्यं शक्तिं ददामि तस्माद् युष्माकं
कापि हानि र्न भविष्यति। भूता युष्माकं वशीभवन्ति, एतन्निमित्तात् २०
मा समुल्लसत स्वर्गे युष्माकं नामानि लिखितानि सन्तीति निमित्तं समु-
ल्लसत। तद्घटिकायां यीशु र्मनसि जाताह्लादः कथयामास हे स्वर्ग २१
पृथिव्योरेकाधिपते पितस्त्वं ज्ञानवतां विदुषाञ्च लोकानां पुरस्तात् सर्व्व-
मेतद् अप्रकाश्य बालकानांपुरस्तात्प्राकाशय एतस्माद्धेतोस्त्वां धन्यं वदामि,
हे पितरित्थं भवतु यत एतदेव तव गोचर उत्तमम्। पित्रा सर्व्वाणि २२
मयि समर्पितानि पितरं विना कोपि पुत्रं न जानाति किञ्च पुत्रं विना
यस्मै जनाय पुत्रस्तं प्रकाशितवान तञ्च विना कोपि पितरं न जानाति।

ततःपरं स शिष्यान् प्रति परावृत्य गुप्तं जगाद यूयमेतानि सर्व्वाणि २३
पश्यथ ततोहेतो र्युष्माकं चक्षूंषि धन्यानि युष्मानहं वदामि यूयं यानि २४
सर्व्वाणि पश्यथ तानि बहवो भविष्यद्वादिनो भूपतयश्च द्रष्टुमिच्छन्तोपि
द्रष्टुं न प्राप्नुवन् किञ्च युष्माभि र्याया: कथाः श्रूयन्ते ताः श्रोतुमिच्छ-
न्तोपि श्रोतुं नालभन्त।

अनन्तरं एको व्यवस्थापक उत्थाय तं परीक्षितुं पप्रच्छ हे उपदेशक २५
अनन्तायुषः प्राप्तये मया किं करणीयं? यीशुः प्रत्युवाच, अत्रार्थे व्यवस्थायां २६
किं लिखितमस्ति? त्वं कीदृक् पठसि? ततः सोवदत् त्वं सर्व्वान्तःकरणैः २७
सर्व्वप्राणैः सर्व्वशक्तिभिः सर्व्वचित्तैश्च प्रभौ परमेश्वरे प्रेम कुरु किञ्च समी-
पवासिषु स्ववत् प्रेम कुरु। तदा स कथयामास त्वं यथार्थं प्रत्यवोचः, इत्थम २८
आचर तेनैव जीविष्यसि। किन्तु स जनः स्वं निर्द्दोषं ज्ञापयितुं यीशुं २९
पप्रच्छ मम समीपवासी कः? ततो यीशुः प्रत्युवाच, एको जनो यिरूशा- ३०
लम् पुरात् यिरीहोपुरं याति, एतर्हि दस्यूनां करेषु पतिते ते तस्य
वस्त्रादिकं हृतवन्त एवं तमाहत्य मृतप्रायं कृत्वा त्यक्त्वा ययुः। अकस्माद् ३१

३२ एको याजकस्तेन मार्गेण गच्छन् तं दृष्ट्वा मार्गान्यपार्श्वेन जगाम। इत्थम्
एको लेवीस्तत्स्थानं प्राप्य तस्यान्तिकं गत्वा तं विलोक्यान्येन पार्श्वेन
३३ जगाम। किन्त्वेकः शोमिरोणीयो गच्छन् तत्स्थानं प्राप्य तं दृष्ट्वादयत।
३४ एवं तस्यान्तिकं गत्वा तस्य क्षतेषु तैलं द्राक्षारसञ्च प्रक्षिप्य क्षतानि बद्ध्वा निज-
३५ वाहनोपरि तमुपवेश्य प्रवासीयगृहम् आनीय तं सिषेवे। परस्मिन् दिवसे
निजगमनकाले द्वौ मुद्रापादौ तद्गृहस्वामिने दत्त्वावदत् जनमेनं सेवस्व
तत्र योऽधिको व्ययो भविष्यति तमहं पुनरागमनकाले परिशोत्स्यामि।
३६ एषां त्रयाणां मध्ये तस्य दस्युहस्तपतितस्य जनस्य समीपवासी कः? त्वया
३७ किं बुध्यते? ततः स व्यवस्थापकः कथयामास यस्तस्मिन् दयां चकार। तदा
यीशुः कथयामास त्वमपि गत्वा तथाचर।

३८ ततःपरं ते गच्छन्त एकस्मिन् ग्रामे प्रवेशं चक्रुः; तदा मर्थानामा स्त्री
३९ स्वगृहे तस्यातिथ्यं चकार। तस्मात् मरियम् नामधेया तस्या भगिनी
४० यीशोः पदसमीप उपविश्य तस्योपदेशकथां श्रोतुमारेभे। किन्तु मर्था
नानासेवनकर्म्मणि व्यग्रा जाता तस्माद्धेतोस्तस्य समीपमागत्य बभाषे हे
प्रभो मम भगिनी केवलं ममोपरि सर्व्वकर्म्मणां भारम् अर्पितवती तत्र
भवता किञ्चिदपि न मनो निधीयते किम्? मम साहाय्यं कर्त्तुं तामादि-
४१ शतु भवान्। ततो यीशुः प्रत्युवाच हे मर्थे हे मर्थे त्वं नानाकार्य्येषु
४२ चिन्तितवती व्यग्रा चासि किन्तु प्रयोजनीयम् एकमात्रम् आस्ते। अप-
रञ्च यदुत्तमं भागं कोपि हर्त्तुं न शक्नोति तमेव मरियम् मनोनीतम
अकार्षीत्।

---

११ एकादशोऽध्यायः।

१ प्रार्थनार्थं ख्रीष्टस्योपदेशः १४ मूकभूतत्याजनं २४ अशुचिभूतस्य दृष्टान्तः २७ धन्यलोकानां निर्णयः २९ लोकानामन्तिके ख्रीष्टस्य प्रचारः ३३ प्रदीपस्य दृष्टान्तकथा ३७ फिरूशिनः प्रति तस्य कथा ४५ व्यवस्थापकान् प्रति तस्य कथा च।

१ तदनन्तरं स कस्मिंश्चित् स्थाने प्रार्थयत तत्समाप्तौ सत्यां तस्यैकः
शिष्यस्तं जगाद हे प्रभो योहन् यथा स्वशिष्यान् प्रार्थयितुम् उपदिष्टवान

तदाच्छन्नं वस्तु किमपि नास्ति तथा यन्न ज्ञास्यते तद्गुप्तं वस्तु
किमपि नास्ति। अन्धकारे तिष्ठन्तो याः कथा अकथयत ताः सर्व्वाः ३
कथा दीप्तौ श्रोष्यन्ते किञ्च निर्जने कर्णे यदकथयत गृहपृष्ठात् तत् प्रचा-
रयिष्यते। अपरञ्च हे बन्धवो युष्मानहं वदामि ये शरीरस्य नाशं विना ४
किमप्यपरं कर्त्तुं न शक्नुवन्ति तेभ्यो मा भैष्ट। तर्हि कस्माद् भेतव्यम् ५
इत्यहं वदामि यः शरीरं नाशयित्वा नरके निक्षेप्तुं शक्नोति तस्मादेव भयं
कुरुत पुनरपि वदामि तस्मादेव भयं कुरुत। पञ्च चटकपक्षिणः किं द्वाभ्यां ६
ताम्रखण्डाभ्यां न विक्रीयन्ते तथापीश्वरस्तेषाम् एकमपि न विस्मरति।
युष्माकं शिरःकेशा अपि गणिताः सन्ति तस्माद्धेतो मा बिभीत बहु- ७
चटकपक्षिभ्योपि यूयं बहुमूल्याः। अपरं युष्मभ्यं कथयामि यः कश्चिन् ८
मानुषाणां साक्षान् मां स्वीकरोति मनुष्यपुत्त्र ईश्वरदूतानां साक्षात् तं
स्वीकरिष्यति; किन्तु यः कश्चिन्मानुषाणां साक्षान्मां न स्वीकरोति तम् ९
ईश्वरस्य दूतानां साक्षाद् अहं न स्वीकरिष्यामि। अन्यच्च यः कश्चिन् १०
मनुजसुतस्य निन्दाभावेन काञ्चित् कथां कथयति तस्य तत्पापस्य मोचनं
भविष्यति किन्तु यदि कश्चित् पवित्रम् आत्मानं निन्दति तर्हि तस्य तत्
पापस्य मोचनं न भविष्यति। अपरञ्च यदा लोका युष्मान् भजनगेहं ११
विचारकर्तृराज्यकर्तृणां सम्मुखञ्च नेष्यन्ति तदा केन प्रकारेण किमुत्तरं
वदिष्यथ किं कथयिष्यथ चेत्यत्र मा चिन्तयत; यतो युष्माभि र्यद् यद् १२
वक्तव्यं तत् तस्मिन् समयएव पवित्र आत्मा युष्मान् शिक्षयिष्यति।

ततःपरं जनतामध्यस्थः कश्चिज्जनस्तं जगाद हे गुरो मया सह पैतृकं १३
धनं विभक्तुं मम भ्रातरमाज्ञापयतु भवान्। किन्तु स तमवदत् हे मनुष्य १४
युष्माकं विचारं विभागञ्च कर्त्तुं मां को नियुक्तवान्? अनन्तरं स लोकान- १५
वदत् लोभे सावधानाः सतर्काश्च तिष्ठत यतो बहुसम्पत्तिप्राप्त्या मनुष्य-
स्यायु र्न भवति। पश्चाद् दृष्टान्तकथामुत्थाप्य कथयामास, एकस्य धनिनो १६
भूमौ बहूनि शस्यानि जातानि। ततः स मनसा चिन्तयित्वा कथयाम्बभूव १७
ममैतानि समुत्पन्नानि द्रव्याणि स्थापयितुं स्थानं नास्ति किं करिष्यामि?

१८ ततोवदद् इत्थं करिष्यामि मम सर्व्वभाण्डागाराणि भङ्क्त्वा बृहद्भाण्डागारं
१९ निर्म्माय तन्मध्ये सर्व्वफलानि द्रव्याणि च स्थापयिष्यामि। एवं निजमनो
वदिष्यामि हे मनो बहुवत्सरार्थं नानाद्रव्याणि सञ्चितानि सन्ति विश्रामं
२० कुरु भुक्त्वा पीत्वा कौतुकञ्च कुरु ; किन्त्वीश्वरस्तम् अवदत् रे निर्बोध अद्य
रात्रौ तव प्राणास्त्वत्तो नेष्यन्ते तत एतानि यानि द्रव्याणि त्वयासादि-
२१ तानि तानि कस्य भविष्यन्ति? अतएव.यः कश्चिद् ईश्वरस्य समीपे धन
सञ्चयमकृत्वा केवलं स्वनिकटे सञ्चयं करोति सोपि तादृशः।
२२ अथ स शिष्येभ्यः कथयामास युष्मानहं वदामि किं खादिष्यामः? किं
परिधास्यामः? इत्युक्त्वा जीवनस्य शरीरस्य चार्थं चिन्तां मा कार्ष्ट।
२३ भक्ष्याज्जीवनं भूषणाच्छरीरञ्च श्रेष्ठं भवति। काकपक्षिणां कार्य्यं विचा-
२४ रयत ते न वपन्ति शस्यानि च न छिन्दन्ति तेषां भाण्डागाराणि न
सन्ति कोषाश्च न सन्ति तथापीश्वरस्तेभ्यो भक्ष्याणि ददाति यूयं
२५ पक्षिभ्यः श्रेष्ठतरा न किं? अपरञ्च भावयित्वा निजायुषः क्षणमात्रं वर्द्धयितुं
२६ शक्नोति, एतादृशो लोको युष्माकं मध्ये कोस्ति? अतएव क्षुद्रं कार्य्यं साधयि-
२७ तुम् असमर्था यूयम् अन्यस्मिन् कार्य्ये कुतोभावयत? अन्यच्च काम्पिल्लपुष्पं
कथं वर्द्धते तदपि विचारयत तत् कञ्चन श्रमं न करोति तन्तूंश्च न जन-
यति किन्तु युष्मभ्यं यथार्थं कथयामि सुलेमान् बह्वैश्वर्य्यान्वितोपि पुष्प-
२८ स्यास्य सदृशो विभूषितो नासीत्। अद्य क्षेत्रे वर्त्तमानं श्वश्चुल्ल्यां क्षेप्स्य-
मानं यत् तृणं तस्मै यदीश्वर एतादृग् भूषणं ददाति तर्हि हे अल्पप्रत्य-
२९ यिनो युष्मभ्यं किं भूषणं न दास्यति? अतएव किं खादिष्यामः? किं परि-
३० धास्यामः? एतदर्थं मा व्याप्रीयध्वं मा संदिग्ध्वञ्च। जगतो देवार्चका एव तानि
चेष्टन्ते; अपरञ्च एषु वस्तुषु युष्माकं प्रयोजनमास्ते इति युष्माकं पिता
३१ जानाति। अतएवेश्वरस्य राज्यार्थं सचेष्टा भवत तथाकृते सर्व्वाण्येतानि
३२ द्रव्याणि युष्मभ्यं दायिष्यन्ते। हे क्षुद्रमेषव्रज मा भैष्ट युष्मभ्यं राज्यं दातुं
३३ युष्माकं पितुः सम्मतिरस्ति। अतएव युष्माकं या या सम्पत्तिरस्ति तां तां
विक्रीय वितरत; एवं यत् स्थानं चौरा नागच्छन्ति कीटाश्च न क्षाययन्ति

तादृशे स्वर्गे निजार्थम् अजर सम्पुटके अक्षयं धनं सञ्चिनुत ; यतो यत्र ३४
युष्माकं धनं वर्त्तते तत्रैव युष्माकं मनः।

अपरञ्च यूयं प्रदीपं ज्वालयित्वा बद्धकटयस्तिष्ठत ; एवं प्रभु र्विवाहा- ३५
दागत्य यदैव द्वारमाहन्ति तदैव द्वारं मोचयितुं यथा भृत्या अपेक्ष्य ३६
तिष्ठन्ति तथा यूयमपि तिष्ठत। यतोहेतोः प्रभुरागत्य यान् दासान् सचे- ३७
तनान् तिष्ठतो द्रक्ष्यति तएव धन्याः; अहं युष्मान् यथार्थं वदामि प्रभुस्तान्
भोजनार्थम् उपवेश्य स्वयं बद्धकटिः समीपमेत्य परिवेषयिष्यति। किञ्च ३८
द्वितीये तृतीये वा प्रहरे समागत्य यदि तथैव पश्यति तर्हि तएव दासा
धन्याः। अपरञ्च कस्मिन् क्षणे चौरा आगमिष्यन्ति, इति यदि गृहपति ३९
र्ज्ञातुं शक्नोति तदावश्यं जाग्रन् निजगृहे सन्धिं कर्त्तयितुं वारयति
यूयमेतद् वित्त। अतएव यूयमपि सज्जमानास्तिष्ठत यतो यस्मिन् क्षणे ४०
तमपेक्ष्य न तिष्ठथ तस्मिन्नेव क्षणे मनुष्यपुत्त्र आगमिष्यति।

तदा पितरः पप्रच्छ हे प्रभो भवान् किमस्मान् उद्दिश्य किं सर्व्वान् ४१
उद्दिश्य दृष्टान्तकथामिमां वदसि? ततः प्रभुः प्रोवाच प्रभुः समुचितकाले ४२
निजपरिवारार्थं भोज्यपरिवेषणाय यं तत्पदे नियोक्ष्यति तादृशो विश्वास्यो
बोद्धाऽधिपतिः कोस्ति? प्रभुरागत्य यम् एतादृशे कर्म्मणि प्रवृत्तं ४३
द्रक्ष्यति सएव दासो धन्यः। अहं युष्मान् यथार्थं वदामि स तं निजसर्व्वस्व- ४४
स्याधिपतिं करिष्यति। किन्तु प्रभुर्विलम्बेनागमिष्यति, इति विचिन्त्य ४५
स दासो यदि तदन्यदासीदासान् प्रहर्त्तुम् भोक्तुं पातुं मदितुञ्च प्रारभते
तर्हि यदा प्रभुं नापेक्षिष्यते यस्मिन् क्षणे सोचेतनश्च स्थास्यति ४६
तस्मिन्नेव क्षणे तस्य प्रभुरागत्य तं पदभ्रष्टं कृत्वा विश्वासहीनैः सह तस्य
दशां निरूपयिष्यति। किञ्च यो दासः प्रभोराज्ञां ज्ञात्वापि सज्जितो न ४७
तिष्ठति, एवं तदाज्ञानुसारेण कार्य्यं न करोति सोनेकान् प्रहारान् प्राप्स्यति
किन्तु योजनोऽज्ञात्वा प्रहारार्हं कर्म्म करोति सोल्पप्रहारान् प्राप्स्यति।
यतो यस्मै बाहुल्येन दत्तं तस्मादेव बाहुल्येन ग्रहीष्यते, एवं मानुषा यस्य
निकटे बहु समर्पयन्ति तस्माद् बहु वाञ्छन्ति।

४९ अहं पृथिव्यां भिन्नत्वरूपं वह्निं निक्षेप्तुम् आगतोस्मि किन्तु स चेद्
५० इदानीमेव प्रज्वलति तत्र मम का चिन्ता? किन्तु येन दुःखरूपेण मज्ज-
नेनाहं मग्नो भविष्यामि यावत्कालं तस्य सिद्धि र्न भविष्यति तावदहं
५१ कतिकष्टं प्राप्स्यामि। मेलनं कर्त्तुं जगद् आगतोस्मि यूयं किमित्थं
५२ जानीथ युष्मान् वदामि न तथा वरं मेलनाभावं कर्त्तुम् आगतोस्मि। यस्मात्
कारणाद् एतत्कालमारभ्य एकपरिजनानां मध्ये पञ्चजनाः पृथग् भूत्वा
त्रयोजना द्वयोर्जनयोः प्रतिकूला द्वौ जनौ च त्रयाणां जनानां प्रतिकूलौ
५३ भविष्यन्ति। पिता पुत्रस्य विपक्षः पुत्रश्च पितु र्विपक्षो भविष्यति किञ्च
माता कन्याया विपक्षा कन्या च मातु र्विपक्षा भविष्यति तथा श्वश्रूर्बध्वा
विपक्षा बधूश्च श्वश्र्वा विपक्षा भविष्यति।

५४ स लोकेभ्योपरमपि कथयामास पश्चिमदिशि मेघोद्गमं दृष्ट्वा यूयं हठाद्
५५ वदथ वृष्टि र्भविष्यति ततस्तथैव जायते। अपरं दक्षिणतो वायौ वाति
५६ सति वदथ निदाघो भविष्यति ततः सोपि जायते। रे रे कपटिन आका-
शस्य भूम्याश्च लक्षणं बोद्धुं शक्नुथ, किन्तु कालस्यास्य लक्षणं कुतो बोद्धुं न
५७ शक्नुथ? किञ्च यूयं स्वयं कुतो न न्याय्यं विचारयथ?

५८ अपरञ्च विवादिलोकैः सार्द्धं विचारयितुः समीपं गच्छन्तः पथि
तस्मादुद्धारं प्राप्तुं यतध्वं नोचेत् स त्वां धृत्वा विचारयितुः समीपं नयति
५९ विचारयिता यदि त्वां प्रहर्त्तुः समीपे समर्पयति प्रहर्त्ता त्वां कारायां
बध्नाति तर्हि त्वामहं वदामि त्वया निःशेषं कपर्दकेषु न परिशुद्धेषु त्वं
ततो मुक्तिं प्राप्तुं न शक्ष्यसि।

---

१३ त्रयोदशोध्यायः।

१ पापस्य दण्डं त्याजयितुम् अनुतापावश्यकत्वं ६ निष्फलोडुम्बरदृष्टान्तः १० कुब्जिकया आरोग्यकरणं १८ सर्षपकिण्वयोर्दृष्टान्तः २२ उपदेशकथा ३१ हेरोदो विरुद्धसमस्यलोकानामपि तर्जनञ्च।

१ अपरञ्च पिलातो येषां गालीलीयानां रक्तानि बलीनां रक्तैः सहामिश्रयत्
तेषां गालीलीयानां वृत्तान्तं कतिपयजना उपस्थाप्य यीशवे कथयामासुः।

ततः स प्रत्युवाच तेषां लोकानाम् एतादृशी दुर्गति र्घटिता तत्कारणाद् २
यूयं किमन्येभ्यो गालीलीयेभ्योऽप्यधिकपापिनस्तान् जानीथ ? युष्मानहं २
वदामि तथा न, किन्तु मनःसु न परावर्त्तितेषु यूयमपि तथा नंक्ष्यथ।
अपरञ्च शीलोहनाम्न उच्चगृहस्य पतनाद् येऽष्टादशजना मृतास्ते यिरू- ४
शालम् निवासिनः सर्व्वलोकेभ्योऽधिकापराधिनः किं यूयमित्थं जानीथ?
युष्मानहं वदामि तथा न, किन्तु मनःसु न परिवर्त्तितेषु यूयमपि तथा ५
नंक्ष्यथ।

अनन्तरं स इमां दृष्टान्तकथामकथयद् एको जनो द्राक्षाक्षेत्रमध्य ६
एकमुडुम्बरवृक्षं रोपितवान्। पश्चात् स आगत्य तस्मिन् फलानि गवेषया- ७
मास किन्तु फलाप्राप्तेः कारणाद् उद्यानकारं भृत्यं जगाद पश्य वत्सरत्रयं
यावदागत्य एतस्मिन्नुडुम्बरतरौ फलान्यन्विच्छामि किन्तु नैकमपि प्राप्नोमि
तरुरयं कुतो वृथा स्थानं व्याप्य तिष्ठति, एनं छिन्धि। ततो भृत्यः प्रत्युवाच ८
हे प्रभो पुनर्व्वर्षमेकं स्थातुं आदिश; एतस्य मूलस्य चतुर्दिक्षु खनित्वा-
हम् आलवालं स्थापयामि। ततः फलितुं शक्नोति यदि न फलति तर्हि ९
पश्चात् छेत्स्यसि।

अथ विश्रामवारे भजनगेहे यीशुरुपदिशति तस्मिन् समये भूतग्रस्तत्वात् १०
कुब्जीभूय केनाप्युपायेन ऋजु र्भवितुं न शक्नोति याऽष्टादशवर्षाणि यावत् ११
दुर्व्वला स्त्री तां तत्रोपस्थितां विलोक्य यीशुस्तामाहूय कथितवान् हे १२
नारि तव दौर्व्वल्यात् त्वं मुक्ता भव। ततःपरं तस्या गात्रे हस्तार्पणमात्रात् १३
सा ऋजु र्भूत्वेश्वरस्य धन्यवादं कर्त्तुमारेभे। किन्तु विश्रामवारे यीशुना १४
तस्याः स्वास्थ्यकरणाद् भजनगेहस्याधिपतिः प्रकुप्य लोकान् उवाच
षट्सु दिनेषु लोकैः कर्म्म कर्त्तव्यं तस्माद्धेतोः स्वास्थ्यार्थं तेषु दिनेषु आग-
च्छत विश्रामवारे मागच्छत। तदा प्रभुः प्रत्युवाच रे कपटिन् युष्माकम् १५
एकैको जनो विश्रामवारे स्वीयं स्वीयं वृषभं गर्दभं वा बन्धनान्मोचयित्वा
जलं पाययितुं किं न नयति ? तर्ह्यष्टादशवत्सरान् यावत् शैताना बद्धा १६
इब्राहीमः सन्ततिरियंनारी किं विश्रामवारे न मोचयितव्या ? एषु वाक्येषु

कथितेषु तस्य विपक्षाः सलज्जा जाताः किन्तु तेन कृतसर्व्वमहाकर्म्म-
कारणात् लोकनिवहः सानन्दोऽभवत्।
१८ अनन्तरं सोवदद् ईश्वरस्य राज्यं कस्य सदृशं? केन तदुपमास्यामि? यत्
१९ सर्षपबीजं गृहीत्वा कश्चिज्जन उद्यान उप्तवान् तद्बीजमङ्कुरितं सत् महा-
वृक्षोऽजायत ततस्तस्य शाखासु विहायसीयविहगा आगत्य न्यूषुः, तद्राज्यं
२० तादृशेन सर्षपबीजेन तुल्यं। पुनः कथयामास ईश्वरस्य राज्यं कस्य सदृशं
२१ वदिष्यामि? यत् किण्वं काचित् स्त्री गृहीत्वा द्रोणत्रयपरिमितगोधूम-
चूर्णेषु स्थापयामास ततः क्रमेण तत् सर्व्वगोधूमचूर्णं व्याप्नोति तस्य किण्वस्य
तुल्यम् ईश्वरस्य राज्यं।
२२ ततः स यिरूशालम् नगरं प्रति यात्रां कृत्वा नगरे नगरे ग्रामे ग्रामे
२३ समुपदिशन् जगाम। तदा कश्चिज्जनस्तं पप्रच्छ हे प्रभो किं केवलम्
२४ अल्पे लोकाः परित्रास्यन्ते? ततः स लोकान् उवाच संकीर्णद्वारेण प्रवेष्टुं
यतध्वं यतोहं युष्मान् वदामि बहवः प्रवेष्टुं चेष्टिष्यन्ते किन्तु न शक्ष्यन्ति।
२५ गृहपतिनोत्थाय द्वारे रुद्धे सति यदि यूयं वहिः स्थित्वा द्वारमाहत्य वदथ
हे प्रभो हे प्रभो अस्मत्कारणाद् द्वारं मोचयतु ततः स इति प्रतिवक्ष्यति यूयं
२६ कुत्रत्या लोका इत्यहं न जानामि। तदा यूयं वदिष्यथ तव साक्षाद् वयं
२७ भोजनं पानञ्च कृतवन्तः त्वञ्चास्माकं नगरस्य पथि समुपदिष्टवान्। किन्तु
स वक्ष्यति युष्मानहं वदामि यूयं कुत्रत्या लोका इत्यहं न जानामि; हे
२८ दुराचारिणो यूयं मत्तो दूरीभवत। तदा इब्राहीमं इस्हाकं याकुवञ्च
सर्व्वभविष्यद्वादिनश्च ईश्वरस्य राज्यं प्राप्तान् स्वांश्च वहिष्कृतान्
२९ दृष्ट्वा यूयं रोदनं दन्तैर्दन्तघर्षणञ्च करिष्यथ। अपरञ्च पूर्व्वपश्चिमदक्षि-
३० णोत्तरदिग्भ्यो लोका आगत्य ईश्वरस्य राज्ये निवत्स्यन्ति। पश्येत्थं शेषीया
लोका अग्रा भविष्यन्ति, अग्रीया लोकाश्च शेषा भविष्यन्ति।
३१ अपरञ्च तस्मिन् दिने कियन्तः फिरूशिन आगत्य यीशुं प्रोचुः वहि-
३२ र्गच्छ स्थानादस्मात् प्रस्थानं कुरु हेरोद् त्वां जिघांसति। ततः स प्रत्य-
वोचत् पश्याद्य श्वश्च भूतान् विहाप्य रोगिणोऽरोगिणः कृत्वा तृतीयेह्नि

विष्यामि कथामेतां यूयमित्वा तं भूरिमायं वदत। तथाप्यद्य श्वः परश्वश्च ३३
मया गमनागमने कर्त्तव्ये यतो हेतोर्यिरूशालमो बहिः कुत्रापि कोपि
भविष्यद्वादी न घानिष्यते। हे यिरूशालम् हे यिरूशालम् त्वं भविष्यद् ३४
वादिनो हंसि तवान्तिके प्रेरितान् प्रस्तरेण हंसि च; यथा कुक्कुटी
पक्षाधः स्वशावकान् संगृह्णाति तथाहमपि तव शिशून् संग्रहीतुं कति-
वारान् ऐच्छं किन्तु त्वं नैच्छः। पश्यत युष्माकं वासस्थानानि प्रोच्छिद्य- ३५
मानानि परित्यक्तानि च भविष्यन्ति; युष्मानहं यथार्थं वदामि यः प्रभो
र्नाम्नागच्छति स धन्यो यावत्कालं यूयमीदृशीं वाचं न वदिष्यथ तावत्-
कालं यूयं मां न द्रक्ष्यथ।

---

## १४ चतुर्दशोऽध्यायः।

१ जलोदरिणः स्वास्थ्यकरणं ७ नम्रत्वोपदेशः १२ निमन्त्रणविधिः १५ महाभोज्य-दृष्टान्तः २५ नानोपदेशकथा च।

अनन्तरं विश्रामवारे यीशौ प्रधानस्य फिरूशिनो गृहे भोक्तुं गतवति १
ते तं वीक्षितुम् आरेभिरे। तदा जलोदरी तस्य सम्मुखे स्थितः। ततः स २
व्यवस्थापकान् फिरूशिनश्च पप्रच्छ विश्रामवारे स्वास्थ्यं कर्त्तव्यं न वा? ३
ततस्ते किमपि न प्रत्यूचुः। तदा स तं रोगिणं स्वस्थं कृत्वा विससर्ज; तानुवाच ४
च युष्माकं कस्यचिद् गर्द्दभो वृषभो वा चेद् गर्त्ते पतति तर्हि विश्रामवारे ५
तत्क्षणं स किं तं नोत्थापयिष्यति? ततस्ते कथाया एतस्याः किमपि प्रति- ६
वक्तुं न शेकुः।

अपरञ्च प्रधानस्थानमनोनीतत्वकरणं विलोक्य स निमन्त्रितान् एतद्- ७
उपदेशकथां जगाद त्वं विवाहादिभोज्येषु निमन्त्रितः सन् प्रधानस्थाने ८
मोपावेक्षीः। त्वत्तो गौरवान्वितनिमन्त्रितलोक आयाते निमन्त्रयिता- ९
गत्य मनुष्यायैतस्मै स्थानं देहीति वाक्यं चेद् वक्ष्यति तर्हि त्वं सङ्कु-
चितो भूत्वा स्थान इतरस्मिन् उपवेष्टुम् उद्यंस्यसि। अस्मात् कारणादेव त्वं १०
निमन्त्रितो गत्वाऽप्रधानस्थान उपविश ततो निमन्त्रयितागत्य वदिष्यति
हे बन्धो प्रोच्चस्थानं गत्वोपविश तथा सति भोजनोपविष्टानां सकलानां

११ साक्षात् त्वं मान्यो भविष्यसि । यः कश्चित् स्वमुन्नमयति स नमयिष्यते
किन्तु यो जनः स्वं नमयति स उन्नमयिष्यते ।

१२ तदा स निमन्त्रयितारं जनमपि जगाद मध्याह्ने रात्रौ वा भोज्ये
कृते निजबन्धुगणो वा भ्रातृगणो वा ज्ञातिगणो वा धनिगणो वा
समीपवासिगणो वा एतेषां कमपि न निमन्त्रय तथाकृते चेत् ते त्वां निम-
१३ न्त्रयिष्यन्ति तर्हि शोधो भविष्यति । किन्तु यदा भोज्यं करोषि तदा
१४ दरिद्रशुष्ककरखञ्जान्धान् निमन्त्रय तत आशिषं लप्स्यसे; तेषु
परिशोधं कर्त्तुमशक्तुत्सु श्मशानाद्धार्म्मिकानामुत्थानकाले त्वं फलं
लप्स्यसे ।

१५ अनन्तरं तां कथां निशम्य भोजनोपविष्टः कश्चित् कथयामास यो जन
१६ ईश्वरस्य राज्ये भोक्तुं लप्स्यते सएव धन्यः । ततः स उवाच कश्चिद् रात्रौ
१७ भोज्यं कृत्वा बहून् निमन्त्रयामास । ततो भोजनानेहसि निमन्त्रितलोकान्
आह्वातुं दासद्वारा कथयामास खाद्यद्रव्याणि सर्व्वाणि समासादितानि
सन्ति यूयमागच्छत किन्तु ते सर्व्व एकैकं छलं कृत्वा क्षमां प्रार्थयाञ्चक्रिरे ।
१८ प्रथमो जनः कथयामास क्षेत्रमेकं क्रीतवानहं तदेव द्रष्टुं मया गन्तव्यम्
१९ अतएव मां क्षन्तुं तं निवेदय । अन्योजनः कथयामास दशवृषानहं क्रीत-
२० वान् तान् परीक्षितुं यामि तस्मादेव मां क्षन्तुं तं निवेदय । अपरः कथ-
२१ यामास व्यूढवानहं तस्मात् कारणाद् यातुं न शक्नोमि । पश्चात् स दासो
गत्वा निजप्रभोः साक्षात् सर्व्ववृत्तान्तं निवेदयामास; ततोसौ गृहपतिः
कुपित्वा स्वदासं व्याजहार त्वं सत्वरं नगरपथम् उपपथञ्च गत्वा दरिद्र-
२२ शुष्ककरखञ्जान्धान् अत्रानय । ततो दासोवदत् हे प्रभो भवत आज्ञानु-
२३ सारेणाक्रियत तथापि स्थानमस्ति । तदा प्रभुः पुन र्दासायाकथयत् राज-
२४ पथं वृक्षमूलञ्च यात्वा मदीयगृहपूरणार्थं लोकानागन्तुं प्रवर्त्तय । अहं
युष्मभ्यं कथयामि पूर्व्वनिमन्त्रितानामेकोपि ममास्य रात्रिभोज्यस्यास्वादं
न प्राप्स्यति ।

२५ अनन्तरं बहुषु लोकेषु यीशोः पश्चाद् व्रजितेषु सत्सु स व्याघुट्य तेभ्यः

कथयामास यः कश्चित् मम समीपम् आगत्य स्वस्य माता पिता पत्नी २६
सन्ताना भ्रातरो भगिन्यो निजप्राणाश्च एतेभ्यः सर्व्वेभ्यो मय्यधिकं प्रेम न
करोति स मम शिष्यो भवितुं न शक्ष्यति। यः कश्चित् स्वीयं क्रुशं वहन् २७
मम पश्चान्न गच्छति सोपि मम शिष्यो भवितुं न शक्ष्यति। दुर्गनिर्म्माणे २८
कतिव्ययो भविष्यति तथा तस्य समाप्तिकरणार्थं सम्पत्तिरस्ति न वा
प्रथममुपविश्य एतन्न गणयति युष्माकं मध्य एतादृशः कोस्ति? नोचेत् २९
भित्तिं कृत्वा शेषे यदि समापयितुं न शक्ष्यति तर्हि मानुषोयं निचेतुम् ३०
आरभत समापयितुं नाशक्नोत्, इति व्याहृत्य सर्व्वे तमुपहसिष्यन्ति। अप- ३१
रञ्च भिन्नभूपतिना सह युद्धं कर्त्तुम् उद्यम्य दशसहस्राणि सैन्यानि गृहीत्वा
विंशतिसहस्रैः सैन्यैः सहितस्य समीपवासिनः सम्मुखं यातुं शक्ष्यामि न
वेति प्रथमं उपविश्य न विचारयति, एतादृशो भूमिपतिः कः? यदि न ३२
शक्नोति तर्हि रिपाववतिदूरे तिष्ठति सति निजदूतं प्रेष्य सन्धिं कर्त्तुम्
प्रार्थयते। तद्वत् युष्माकं मध्ये यः कश्चित् मदर्थं सर्व्वस्वं हातुं न शक्नोति ३३
स मम शिष्यो भवितुं न शक्ष्यति। लवणम् उत्तमम् इति सत्यं किन्तु ३४
यदि लवणस्य लवणत्वम् अपगच्छति तर्हि तत् कथं स्वादुयुक्तं भविष्यति?
तत् भूम्यर्थं आलवालराश्यर्थमपि भद्रं न भवति; लोकास्तद् वहिः ३५
क्षिपन्ति। यस्य श्रोतुं श्रोत्रे स्तः स शृणोतु।

---

१५ पञ्चदशोऽध्यायः।

१ हारितमेषहारितरूप्ययो र्दृष्टान्तः ११ अपव्ययिपुत्त्रस्य दृष्टान्तश्च।

तदा करसञ्चायिनः पापिनश्च लोका उपदेशकथां श्रोतुं यीशोः १
समीपम् आगच्छन्। ततः फिरूशिन उपाध्यायाश्च विवदमानाः कथयामासुः, २
एष मानुषः पापिभिः सह प्रणयं कृत्वा तैः सार्द्धं भुङ्क्ते। तदा स तेभ्य इमां ३
दृष्टान्तकथां कथितवान् कस्यचित् शतमेषेषु तिष्ठत्सु तेषामेकं स यदि ४
हारयति तर्हि मध्येप्रान्तरम् ऊनशतमेषान् विहाय हारितमेषस्य
उद्देशप्राप्तिपर्य्यन्तं न गवेषयति, एतादृशो लोको युष्माकं मध्ये क आस्ते?
किञ्च तस्योद्देशं प्राप्य हृष्टमनास्तं स्कन्धे निधाय स्वस्थानम् आनीय बन्धु- ५

६ बान्धवसमीपवासिन आहूय वक्ति हारितं मेषं प्राप्तोऽहम् अतोहेतो मया
७ सार्द्धम् आनन्दत। तद्वदहं युष्मान् वदामि येषां मनःपरावर्त्तनस्य प्रयो-
जनं नास्ति तादृशैकोनशतधार्म्मिककारणात् य आनन्दः तस्मात् एकस्य
८ मनः परिवर्त्तिनः पापिनः कारणात् स्वर्गे अधिकानन्दो जायते। अप-
रञ्च दशानां रूप्यखण्डानाम् एकखण्डे हारिते प्रदीपं प्रज्वाल्य गृहं
सम्मार्ज्य तस्य प्राप्तिं यावत् यत्नेन न गवेषयति, एतादृशी योषित् कास्ते ?
९ किञ्च प्राप्ते सति बन्धुबान्धवसमीपवासिनः आहूय कथयति हारितं रूप्य-
१० खण्डं प्राप्ताहं तस्मादेव मया सार्द्धम् आनन्दत। तद्वदहं युष्मान् व्याहरामि,
एकेन पापिना मनसि परिवर्त्तिते, ईश्वरस्य दूतानां मध्येप्यानन्दो जायते।
११　अपरञ्च स कथयामास कस्यचिद् द्वौ पुत्रावास्तां तयोः कनिष्ठः पुत्रः
१२ पित्रे कथयामास हे पितस्तव सम्पत्त्या यमंशं प्राप्स्याम्यहं विभज्य तं देहि
१३ ततः पिता निजां सम्पत्तिं विभज्य ताभ्यां ददौ। कतिपयात् कालात् परं
स कनिष्ठपुत्रः समस्तं धनं संगृह्य दूरदेशं गत्वा दुष्टाचरणेन सर्व्वां सम्पत्तिं
१४ नाशयामास। तस्य सर्व्वधने व्ययं गते तद्देशे महादुर्भिक्षं बभूव ततस्तस्य
१५ दैन्यदशा घटितुम् आरेभे। ततःपरं स गत्वा तद्देशीयं गृहस्थमेकम्
१६ आश्रयत; ततः स तं शूकरव्रजं चारयितुं प्रान्तरं प्रेषयामास। केनापि
तस्मै भक्ष्यादानात् स शूकराणां खाद्यवल्कलेन पिचण्डपूरणं वव्राञ्छ।
१७ शेषे स मनसि चेतनां प्राप्य कथयामास हा मम पितुः समीपे कति कति
वेतनभुजो दासा यथेष्टं ततोधिकञ्च भक्ष्यं प्राप्नुवन्ति किन्त्वहं क्षुधा
१८ मुमूर्षुः। अहमुत्थाय पितुः समीपं गत्वा कथामेतां वदिष्यामि हे पितर्
१९ ईश्वरस्य तव च विरुद्धं पापमकरवम् एतत्कारणात् तव पुत्र इति
विख्यातो भवितुं न योग्योस्मि मां तव वैतनिकं दासं कृत्वा स्थापय।
२० पश्चात् स उत्थाय पितुः समीपं जगाम; ततस्तस्य पितातिदूरे तं निरीक्ष्य
२१ दयाञ्चक्रे धावित्वा तस्य कण्ठं गृहीत्वा तं चुचुम्ब च। तदा पुत्र उवाच
हे पितर् ईश्वरस्य तव च विरुद्धं पापमकरवम् तव पुत्र इति विख्यातो
२२ भवितुं न योग्योस्मि च। किन्तु तस्य पिता निजदासान् आदिदेश सर्व्वोत्तम-

वस्त्राण्यानीय परिधापयतैनं हस्ते चाङ्गुरीयकम् अर्पयत पादयोश्चोपानहौ
समर्पयत । अपरञ्च पुष्टं गोवत्सम् आनीय मारयत तं भुक्त्वा वयम् आन- २३
न्दाम। यतोऽयं मम पुत्त्रोऽयम् अम्रियत पुनरजीवीद् एवं हारितो २४
लब्धोऽभूत् ततस्त आनन्दितुम् आरेभिरे। तत्काले तस्य ज्येष्ठः पुत्त्रः २५
क्षेत्र आसीत्। अथ स आगच्छन् निवेशनस्य निकटं प्राप्य नृत्यानां वाद्यानाञ्च २६
शब्दं श्रुत्वा दासानाम् एकम् आहूय पप्रच्छ किं कारणमस्य? ततः सोऽवा- २७
दीत् तव भ्रातागमत् तव तातश्च तं सुशरीरं प्राप्य पुष्टं गोवत्सं मारि-
तवान्। ततः स प्रकुप्य निवेशनान्तः प्रवेष्टुं न सम्मेने ततोऽस्य पिता २८
वहिरागत्य तं साधयामास। ततः स पितरं प्रत्युवाच, पश्य तव काञ्चिद- २९
प्याज्ञां न विलंघ्य बहून् वत्सरान् अहं त्वां सेवे तथापि मित्रैः सार्द्धम्
उत्सवं कर्त्तुं कदापि छागमेकमपि मह्यं नाददाः; किन्तु तव यः पुत्त्रो ३०
वेश्यागमनादिभिस्तव सम्पत्तिम् अपव्ययितवान् तस्मिन्नागतमात्रे तस्यैव
निमित्तं पुष्टं गोवत्सं मारितवान्। तदा तस्य पितावोचत् हे पुत्त्र त्वं ३१
सर्व्वदा मया सहासि तस्मान् मम यद्यदास्ते तत्सर्व्वं तव। किन्तु तवायं ३२
भ्राता मृतः पुनरजीवीद् एवं हारितो भूत्वा प्राप्तोऽभूत्, एतस्मात् कार-
णाद् उत्सवानन्दौ कर्त्तुम् उचितमस्माकम्।

---

१६ षोडशोऽध्यायः।

१ अपव्ययिगृहकार्य्याधीशदृष्टान्तः १० विश्वास्यत्वस्यावश्यकत्वं १४ फिरूशिनः प्रति तर्जनं धनिदरिद्रयो र्दृष्टान्तश्च।

अपरञ्च यीशुः शिष्येभ्योऽन्यामेकां कथां कथयामास कस्यचिद् धनवतो १
मनुष्यस्य गृहकार्य्याधीशे सम्पत्तेरपव्ययेऽपवादिते सति तस्य प्रभुस्तम् आहूय
जगाद त्वयि यामिमां कथां शृणोमि सा कीदृशी? त्वं गृहकार्य्याधीश- २
कर्म्मणो गणनां दर्शय गृहकार्य्याधीशपदे पुनस्त्वं न स्थास्यसि। तदा स ३
गृहकार्य्याधीशो मनसा चिन्तयामास किं करिष्ये? प्रभु र्यदि माम् गृह-
कार्य्याधीशपदात् भ्रंशयति तर्हि मृदं खनितुं मम शक्ति र्नास्ति भिक्षि-
तुञ्च लज्जिष्येऽहं। अतएव मयि गृहकार्य्याधीशपदाच्युते सति यथा लोका ४
मह्यम् आश्रयं दास्यन्ति तदर्थं यत्कर्म्म मया करणीयं तन् निर्णीयते।

५ पश्चात् स स्वप्रभोरेकैकम् अधमर्णम् आहूय प्रथमं पप्रच्छ त्वत्तो मे
६ प्रभोः कति प्राप्यम्? ततः स उवाच, एकशताढकतैलानि; तदा गृह-
कार्य्याधीशः प्रोवाच तव पत्रमानीय शीघ्रमुपविश्य तत्र पञ्चाशत् लिख।
७ पश्चादन्यमेकं पप्रच्छ त्वत्तो मे प्रभोः कति प्राप्यम्? ततः सोवादीत्
एक शताढकगोधूमाः; तदा स कथयामास तर्हि तव पत्रमानीय अशीतिं
८ लिख। तेनैव प्रभुस्तमन्यायकृतम् अधीशं तद्बुद्धिनैपुण्यात् प्रशशंस; इत्थं
दीप्तिरूपसन्तानेभ्य एतत्संसारस्य सन्ताना वर्त्तमानकालेऽधिकबुद्धिमन्तो
९ भवन्ति। अतः कारणाद् वदामि चञ्चलेन धनेन मित्राणि लभध्वं ततो
युष्मासु पदभ्रष्टेष्वपि तानि चिरकालम् आश्रयं दास्यन्ति।

१० यः कश्चित् क्षुद्रे कार्य्ये विश्वास्यो भवति स महति कार्य्येपि विश्वास्यो
भवति किन्तु यः कश्चित् क्षुद्रे कार्य्येऽविश्वास्यो भवति स महति कार्य्ये-
११ प्यविश्वास्यो भवति। अतएव चञ्चलेन धनेन यदि यूयमविश्वास्या जातास्तर्हि
१२ सत्यं धनं युष्माकं करेषु कः समर्पयिष्यति? अपरञ्च परधनेन यदि यूयम्
१३ अविश्वास्या भवथ तर्हि युष्माकं धनं युष्मभ्यं को दास्यति? कोपि दास
उभौ प्रभू सेवितुं न शक्नोति यत एकस्मिन् प्रीयमाणोऽन्यस्मिन्नप्रीयते
यद्वा एकं जनं समादृत्य तदन्यं तुच्छीकरोति तद्वत् यूयमपि धनेश्वरौ
द्वौ सेवितुं न शक्नुथ।

१४ तदैताः सर्व्वाः कथाः श्रुत्वा लोभिफिरूशिनस्तमुपजहसुः। ततः स
१५ उवाच यूयं मनुष्याणां निकटे स्वान् निर्दोषान् दर्शयथ किन्तु युष्माकम्
अन्तःकरणानीश्वरो जानाति यत् मनुष्याणाम् अति प्रशंस्यं तद् ईश्व-
१६ रस्य घृण्यं। योहन आगमनपर्य्यन्तं युष्माकं समीपे व्यवस्था भविष्यद्वादिनां
लेखनानि चासन् ततःप्रभृति ईश्वरराज्यस्य सुसंवादः प्रचरति एकैको
१७ लोकस्तन्मध्यं यत्नेन प्रविशति च। वरं नभसः पृथिव्याश्च लोपो भवि-
१८ ष्यति तथापि व्यवस्थाया एकबिन्दोरपि लोपो न भविष्यति। यः कश्चित्
स्वीयां भार्य्यां विहाय स्त्रियमन्यां विवहति स परदारान् गच्छति यश्च
तां त्यक्तां नारीं विवहति सोपि परदारान् गच्छति।

एको धनी मनुष्यः शुक्लानि सूक्ष्माणि वस्त्राणि पर्य्यदधात् १९
प्रतिदिनं परितोषरूपेणाभुंक्तापिवच्च। सर्व्वाङ्गे क्षतयुक्त इलियासर् २०
नाम्ना कश्चिद् दरिद्रस्तस्य धनवतो भोजनपात्रात् पतितम् उच्छिष्टं भोक्तुं
वाञ्छन् तस्य द्वारे पतित्वातिष्ठत्; अथ श्वान आगत्य तस्य क्षतान्यलिहन्। २१
कियत्कालात्परं स दरिद्रः प्राणान् जहौ; ततः स्वर्गीयदूतास्तं नीत्वा २२
इब्राहीमः क्रोड उपवेशयामासुः। पश्चात् स धनवानपि ममार तं श्मशाने
स्थापयामासुश्च; किन्तु परलोके स वेदनाकुलः सन् ऊर्द्ध्वं निरीक्ष्य बहु- २३
दूराद् इब्राहीमं तत्क्रोड इलियासरञ्च विलोक्य रुवन्नुवाच; हे पितर् २४
इब्राहीम् अनुगृह्य अङ्गुल्यग्रभागं जले मज्जयित्वा मम जिह्वां शीतलां
कर्त्तुम् इलियासरं प्रेरय यतो वह्निशिखातोहं व्यथितोस्मि। तदा इब्रा- २५
हीम् बभाषे हे पुत्र त्वं जीवन् सम्पदं प्राप्तवान् इलियासर् तु विपदं प्राप्त-
वान् एतत् स्मर किन्तु सम्प्रति तस्य सुखं तव च दुःखं भवति। अपर- २६
मपि युष्माकम् अस्माकञ्च स्थानयो र्मध्यादूरत्वमस्ति तत एतत्स्थानस्य
लोकास्तत्स्थानं यातुं यद्वा तत्स्थानस्य लोका एतत्स्थानमायातुं न
शक्नुवन्ति। तदा स उक्तवान् हे पितस्तर्हि त्वां निवेदयामि मम पितु- २७
र्गेहे ये मम पञ्च भ्रातरः सन्ति ते यथैतद् यातनास्थानं नायास्यन्ति तथा २८
मन्त्रणां दातुं तेषां समीप इलियासरं प्रेरय। तत इब्राहीम् उवाच २९
मुसा भविष्यद्वादिनाञ्च पुस्तकानि तेषां निकटे सन्ति ते तद्वचनं मन्यन्तां।
तदा स निवेदयामास हे पितर् इब्राहीम् न तथा किन्तु यदि मृत- ३०
लोकानां कश्चित् तेषां समीपं याति तर्हि ते मनांसि व्याघोटयिष्यन्ति।
तत इब्राहीम् जगाद ते यदि मुसा भविष्यद्वादिनाञ्च वचनानि न मन्यन्ते ३१
तर्हि मृतलोकानां कस्मिंश्चिद् उत्थितेपि ते तस्य मन्त्रणां न मंस्यन्ते।

---

१७ सप्तदशोध्यायः।

विघ्नस्यानुत्पादनार्थोपदेशः ७ प्रभुदासयोराचारविधिः ११ दशकुष्ठिनां स्वास्थ्य-
करणं २० ईश्वरराज्यस्य कथा २२ ख्रीष्टागमनकथा च।

इतःपरं यीशुः शिष्यान् उवाच विघ्नैरवश्यम् आगन्तव्यं किन्तु विघ्ना १

२ घटिष्यन्ते येन तस्य दुर्गति र्भविष्यति। एतेषां क्षुद्रप्राणिनाम् एकस्यापि
विघ्नजननात् तस्य गले पेषणीं बद्ध्वा सिन्धौ निक्षिप्तत्वं तस्य सौभाग्यं।
३ यूयं स्वेषु सावधाना स्तिष्ठत ; तव भ्राता यदि तव विरुद्धम् अपराध्यति
४ तर्हि तं तर्जय तेन यदि मनः परिवर्त्तयति तर्हि तं क्षमस्व। पुनरेक-
दिनमध्ये यदि तव विरुद्धं सप्तकृत्वोऽपराध्यति किन्तु सप्तकृत्व आगत्य मनः
५ परिवर्त्त्य मयापराद्धम् इति वदति तर्हि तं क्षमस्व। किञ्च प्रेरिताः प्रभुम्
६ अवदन् अस्माकं विश्वासं वर्द्धय। प्रभुरुवाच यदि युष्माकं सर्षपैकप्रमाणो
विश्वासोऽस्ति तर्हि त्वं समूलमुत्पाटितो भूत्वा समुद्रे रोपितो भव कथायाम्
एतस्याम् एतदुडुम्बराय कथितायां स युष्माकमाज्ञावहो भविष्यति।
७ अपरं स्वदासो हलं वाहयित्वा वा पशून् चारयित्वा क्षेत्राद् आगत-
८ मात्रं तं वदति, एहि भोक्तुमुपविश, युष्माकम् एतादृशः कोऽस्ति? वरञ्च तद्
अकृत्वा पूर्व्वं मम खाद्यमासाद्य यावद् भुञ्जे पिवामि च तावत् बद्धकटिः
परिचर पश्चात् त्वमपि भोक्ष्यसे पास्यसि च कथामीदृशीं किं न वक्ष्यति?
९ ततो दासेन प्रभोराज्ञानुरूपे कर्म्मणि कृते प्रभुः किं तस्मिन् बाधितो भवि-
१० ष्यति? नेत्थं बुध्यते मया। इत्थं निरूपितेषु सर्व्वकर्म्मसु कृतेषु सत्सु यूयमिदं
वाक्यं वदथ वयम् अनुपकारिणो दासा अस्माकं यद्यत्कर्त्तव्यं तन्मात्रमेव
कृतवन्तः।
११ स यिरूशालमि यात्रां कुर्व्वन् शोमिरोण्गालील्प्रदेशमध्यस्थानेन
१२ गच्छति, एतर्हि कुत्रचिद्ग्रामे प्रवेशमात्रे दशकुष्ठिनस्तं साक्षात् कृत्वा
१३ दूरे तिष्ठन्त उच्चै र्वक्तुमारेभिरे हे प्रभो यीशो दयस्वास्मान्। ततः स
१४ तान् दृष्ट्वा जगाद यूयं याजकानां समीपे स्वान् दर्शयत ततस्ते गच्छन्तो
१५ रोगात् परिष्कृताः। तदा तेषामेकः स्वं स्वस्थं दृष्ट्वा प्रोच्चैर् ईश्वरं धन्यं
१६ वदन् व्याघुट्यायातो यीशो र्गुणाननुवदन् तच्चरणाधोभूमौ पपात ; स
१७ चासीत् शोमिरोणी। तदा यीशुरवदत्, दशजनाः किं न परिष्कृताः? तर्ह्यन्ये
१८ नवजनाः कुत्र? ईश्वरं धन्यं वदन्तम् एनं विदेशिनं विना कोऽप्यन्यो न
१९ प्राप्यत। तदा स तमुवाच त्वमुत्थाय याहि विश्वासस्ते त्वां स्वस्थं कृतवान्।

अथ कदेश्वरस्य राजत्वं भविष्यतीति फिरूशीभिः पृष्टे स प्रत्युवाच २०
ईश्वरस्य राजत्वम् ऐश्वर्य्यदर्शनेन न भविष्यति। अत एतस्मिन् पश्य तस्मिन् २१
वा पश्य इतिवाक्यं लोका वक्तुं न शक्ष्यन्ति, ईश्वरस्य राजत्वं युष्माकम्
अन्तरेवास्ते।

ततः स शिष्यान् जगाद यदा युष्माभि र्मनुजसुतस्य दिनमेकं द्रष्टुम् २२
वाञ्छिष्यते किन्तु न दर्शिष्यते, ईदृक्काल आयाति। तदात्र पश्य वा तत्र २३
पश्येतिवाक्यं लोका वक्ष्यन्ति किन्तु तेषां पश्चाद् मा यात मानुगच्छत च
यतस्तडिद् यथा नाकैकदिश्युदिय तदन्यामपि दिशं व्याप्य प्रकाशते तद्वत् २४
निजदिने मनुजसूनुः प्रकाशिष्यते। किन्तु तत्पूर्व्वं तेनानेकानि दुःखानि २५
भोक्तव्यानि, एवम् एतद्वर्त्तमानलोकैः सोवज्ञातव्यः। किञ्च नोहस्य विद्यमान- २६
काले यथाभवत् मनुष्यसूनोः कालेपि तथा भविष्यति। यावत्कालं नोहो २७
पोतं नारोहद् आप्लावियार्य्येत्य सर्व्वं नानाशयच्च तावत्कालं यथा
लोका अभुञ्जतापिवन् व्यवहन् व्यवाहयंश्च; इत्थं लोटो वर्त्तमान- २८
कालेपि यथा लोका भोजनपानक्रयविक्रयरोपणगृहनिर्म्माणकर्म्मसु
प्रावर्त्तन्त किन्तु यदा लोट् सीदोमो निर्जगाम तदा नभसः सगन्धकाग्नि- २९
वृष्टिर्भूत्वा सर्व्वं व्यनाशयत् तद्वत् मानवपुत्रप्रकाशदिनेपि भविष्यति। तदा ३०
यदि कश्चिद् गृहोपरि तिष्ठति तर्हि स गृहमध्यात् किमपि द्रव्यमानेतुम् ३१
अवरुह्य नैतु; यश्च क्षेत्रे तिष्ठति सोपि व्याघुट्य नायातु। लोटः पत्नीं स्मरत। ३२
यः प्राणान् रक्षितुं चेष्टिष्यते सः प्राणान् हारयिष्यति यस्तु प्राणान् हारयि- ३३
ष्यति स एव प्राणान् रक्षिष्यति। युष्मानहं वच्मि तस्यां रात्रौ शय्यैकगतयो ३४
र्लोकयोरेको धारिष्यते परस्त्यक्ष्यते। किञ्च स्त्रियौ युगपत् पेषणीं व्याव- ३५
र्त्तयिष्यतस्तयोरेका धारिष्यते परा त्यक्ष्यते। एवं पुरुषौ क्षेत्रे स्थास्यतः ३६
तयोरेको धारिष्यते परस्त्यक्ष्यते। तदा ते पप्रच्छुः, हे प्रभो कुत्रेत्थं भवि- ३७
ष्यति? ततः स उवाच यत्र शवस्तिष्ठति तत्र गृध्रा मिलन्ति।

## १८ अष्टादशोऽध्यायः।

१ विधवाया दृष्टान्तः ९ फिरूशिनां करसञ्चायिनाञ्च दृष्टान्तः १५ शिशूनां पाश्चलं १८ कस्यचिद्युवधनवदधिपतेश्चरित्रं २१ खीष्टमरणस्य भविष्यद्वाक्यं ३५ अन्धभिक्षवे चक्षुर्दानञ्च।

१ अपरञ्च लोकैरक्लान्तै र्निरन्तर प्रार्थयितव्यम् इत्याशयेन यीशुना
२ दृष्टान्त एकः कथितः। कुत्रचिन्नगरे कश्चित् प्राड्विवाक आसीत् स ईश्व-
३ रान्नाबिभेत् मानुषांश्च नामन्यत। अथ तत्पुरवासिनी काचिद्विधवा तत्स-
मीपमेत्य विवादिना सह मम विवादं परिष्कुर्व्विति निवेदयामास।
४ ततः स प्राड्विवाकः कियद्दिनानि न तदङ्गीकृतवान् पश्चाच्चित्ते चिन्त-
यामास यद्यपीश्वरान्न बिभेमि मनुष्यानपि न मन्ये तथाप्येषा विधवा मां
५ क्लिश्नाति तस्मादस्या विवादं परिष्करिष्यामि नोचेत् सा सदागत्य मां
६ व्यग्रं करिष्यति। पश्चात् प्रभुरवदद् असावन्यायप्राड्विवाको यदाह तत्र
७ मनो निधत्त। ईश्वरस्य ये मनोनीतलोका दिवानिशं प्रार्थयन्ते स बहु-
८ दिनानि विलम्ब्यापि तेषां विवादान् किं न परिष्करिष्यति? युष्मानहं
वदामि त्वरया परिष्करिष्यति किन्तु यदा मनुष्यपुत्र आगमिष्यति तदा
पृथिव्यां किमीदृशं विश्वासं प्राप्स्यति?

९ ये स्वान् धार्म्मिकान् ज्ञात्वा परान् तुच्छीकुर्व्वन्ति एतादृग्भ्यः कियद्भ्य
१० इमं दृष्टान्तं कथयामास। एकः फिरूशीरपरः करसञ्चायी द्वाविमौ प्रार्थ-
११ यितुं मन्दिरं गतौ। ततोऽसौ फिरूशीरेकपार्श्वे तिष्ठन् हे ईश्वर अहमन्य-
लोकवत् लोठयितान्यायी पारदारिकश्च न भवामि किञ्चास्य करसञ्चा-
१२ यिनस्तुल्यश्च न तस्मात्त्वां धन्यं वदामि, सप्तसु दिनेषु दिनद्वयमुपवसामि
१३ सर्व्वसम्पत्ते र्दशमांशं ददामि च, एतत्कथां कथयन् प्रार्थयामास। किन्तु
स करसञ्चायी दूरे तिष्ठन् स्वर्गं द्रष्टुं साहसमप्राप्य वक्षसि कराघातं कृत्वा
१४ हे ईश्वर पापिष्ठं मां दयस्व, इत्थं प्रार्थयामास। युष्मानहं वदामि तयो-
र्द्वयो र्मध्ये केवलः करसञ्चायी पुण्यवत्त्वेन गणितो निजगृहं जगाम
यतो यः कश्चित् स्वमुन्नमयति स नंस्यते किन्तु यः कश्चित स्वं नमयति स
उन्नंस्यते।

अथ शिशूनां गात्रस्पर्शार्थं लोकास्तान् तस्य समीपमानिन्युः शिष्या- १५
स्तद् दृष्ट्वानेतृन् तर्जयामासुः; किन्तु यीशुस्तानाहूय जगाद मन्नि- १६
कटम् आगन्तुं शिशून् अनुजानीध्वं तांश्च मा वारयत; यत ईश्वर-
राज्याधिकारिण एषां सदृशाः। अहं युष्मान् यथार्थं वदामि यो जनः १७
शिशोः सदृशो भूत्वा ईश्वरराज्यं न गृह्लाति स केनापि प्रकारेण तत् प्रवेष्टुं
न शक्नोति।

अपरम् एकोधिपतिस्तं पप्रच्छ हे परमगुरो अनन्तायुषः प्राप्तये १८
मया किं कर्त्तव्यं? यीशुरुवाच मां कुतः परमं वदसि? ईश्वरं विना कोपि १९
परमो न भवति। परदारान् मा गच्छ, नरं मा जहि, मा चोरय, मिथ्या २०
साक्ष्यं मा देहि, मातरं पितरञ्च संमन्यस्व, एता या आज्ञाः सन्ति तास्त्वं
जानासि। तदा स उवाच बाल्यकालात् सर्व्वा एता आचरामि। इति २१
कथां श्रुत्वा यीशुस्तमवदत् तथापि तवैतत् कर्म्म न्यूनमास्ते, निजं सर्व्वस्वं २२
विक्रीय दरिद्रेभ्यो वितर तस्मात् स्वर्गे धनं प्राप्स्यसि; तत आगत्य ममानु-
गामी भव। किन्त्वेतां कथां श्रुत्वा सोधिपतिः शुशोच यतस्तस्य बहुधन- २३
मासीत्। तदा यीशुस्तमतिशोकान्वितं दृष्ट्वा जगाद धनवताम् ईश्वर- २४
राज्यप्रवेशः कीदृग् दुष्करः। ईश्वरराज्ये धनिनः प्रवेशात् सूचेश्छिद्रेण महा- २५
ङ्गस्य गमनागमने सुकरे। श्रोतारः पप्रच्छुस्तर्हि केन परित्राणं प्राप्स्यते? २६ २७
स उक्तवान् यत् मानुषस्यासाध्यं तद् ईश्वरस्य साध्यं। तदा पितर उवाच २८
पश्य वयं सर्व्वस्वं परित्यज्य तव पश्चाद् गामिनो भवामः। ततः स उवाच २९
युष्मानहं यथार्थं वदामि ईश्वरराज्यार्थम् इह गृहं पितरौ भ्रातृगणं
जायां सन्तानांश्च त्यक्त्वा परकाले ततः प्रचुरान् अनन्तायुश्च न प्राप्स्यति ३०
लोक ईदृशः कोपि नास्ति।

अनन्तरं स द्वादशशिष्यानाहूय बभाषे पश्यत वयं यिरूशालम् नगरं ३१
यामः, तस्मात् मनुष्यपुत्रे भविष्यद्वादिभिरुक्तं यदस्ति तदनुरूपं तं प्रति
घटिष्यते; वस्तुतस्तु सोन्यदेशीयानां हस्तेषु समर्पयिष्यते ते तमुपहसि- ३२
ष्यन्ति च तं प्रत्यन्यायं आचरिष्यन्ति च तद्वपुषि निष्ठीवं निक्षेप्स्यन्ति च

३३ कशया प्रहृत्य तं हनिष्यन्ति च, किन्तु तृतीयदिने स श्मशानाद् उत्था-
३४ स्यति। एतस्याः कथाया अभिप्रायं किञ्चिदपि ते बोद्धुं न शेकुः किञ्च
तेषां निकटेऽस्पष्टत्वात् तस्यैतासां कथानाम् आशयं ते ज्ञातुं न शक्ताः।
३५ अथ तस्मिन् यिरीहो पुरस्यान्तिकं प्राप्ते कश्चिदन्धः पथः पार्श्व उप-
३६ विश्य भिक्षाम् अकरोत् स लोकसमूहस्य गमनशब्दं श्रुत्वा तत्कारणं पृष्ट-
३७ वान्। नासरीययीशु र्यातीति लोकैरुक्ते स उच्चैर्वक्तुमारेभे हे दायूदः
३८ सन्तान यीशो मां दयस्व। ततोऽग्रगामिनस्तं मौनी तिष्ठेति तर्जयामासुः
३९ किन्तु स पुनारुवन् उवाच हे दायूदः सन्तान मां दयस्व। तदा यीशुः
४० स्थगितो भूत्वा स्वान्तिके तमानेतुम् आदिदेश। ततः स तस्यान्तिकम्
४१ आगमत् तदा स तं पप्रच्छ त्वं किमिच्छसि? त्वदर्थमहं किं करिष्यामि? स
४२ उक्तवान् हे प्रभोऽहं द्रष्टुं लभै। तदा यीशुरुवाच द्रष्टुं शक्तिं गृहाण तव
४३ प्रत्ययस्त्वां स्वस्थं कृतवान्। ततस्तत्क्षणात् तस्य चक्षुषी प्रसन्ने; तस्मात् स
ईश्वरं धन्यं वदन् तत्पश्चाद् ययौ तदालोक्य सर्व्वे लोका ईश्वरं प्रशंसि-
तुम् आरेभिरे।

---

१९ ऊनविंशोऽध्यायः।

१ सक्कियनाम्नः करसञ्चायिनस्तारणं ११ कस्यचिन्महतो जनस्य तद्दासस्य चाख्यानं १८ ख्रीष्टस्य यिरूशालमगमनं ४१ तत्पुरीयभाविदुःखे ख्रीष्टस्य विलापः ४५ अन्यकथा च।

१ अथ यदा यीशु र्यिरीहोपुरं प्रविश्य तन्मध्येन यातस्तदा सक्कियनामा
२ करसञ्चायिनां प्रधानो धनवानेको यीशुः कीदृगिति द्रष्टुं चेष्टितवान् किन्तु
३ खर्व्वत्वाल्लोकसंघमध्ये तद्दर्शनमप्राप्य येन पथा स यास्यति तत्पथेऽग्रे धावित्वा
४ तं द्रष्टुम् उडुम्बरतरुमारुरोह। पश्चाद् यीशुस्तत्स्थानं प्राप्य ऊर्द्ध्वं विलोक्य
५ तं दृष्ट्वावादीत् हे सक्किय त्वं शीघ्रमवरोह मयाद्य त्वद्गेहे वस्तव्यं। ततः
६ स शीघ्रमवरुह्य साह्लादं तं जग्राह। तद् दृष्ट्वा सर्व्वे विवदमाना वक्तुमा-
७ रेभिरे सोतिथित्वेन दुष्टलोकगृहं गच्छति। किन्तु सक्कियो दण्डायमानो
८ वक्तुमारेभे हे प्रभो पश्य मम या सम्पत्तिरस्ति तदर्द्धं दरिद्रेभ्यो ददे, अप-
रम् अन्यायं कृत्वा कस्मादपि यदि कदापि किञ्चित् मया गृहीतं तर्हि तच्चतु-

गुणं व्याघुट्य ददामि। तदा यीशुस्तमुक्तवान् अयमपि इब्राहीमः सन्ता- ९
नोऽतः कारणाद् अद्यास्य गृहे त्राणमुपस्थितं। मनुष्यपुत्रो यद् हारितं १०
तद् मृगयितुं रक्षितुञ्च आगतवान्।

अथ स यिरूशालमः समीप उपातिष्ठद् एवम् ईश्वरराजत्वस्यानुष्ठानं ११
तदैव भविष्यतीति लोकैरन्वभूयत तस्मात् स श्रोतृभ्यः पुन र्दृष्टान्तकथाम्
उत्थाप्य कथयामास। कोपि महाल्लोको निजार्थं राजत्वपदं गृहीत्वा परा- १२
वृत्यागन्तुं दूरदेशं जगाम। यात्राकाले निजान् दशदासान् आहूय १३
दशस्वर्णमुद्रा दत्वा ममागमनपर्य्यन्तं बाणिज्यं कुरुतेत्यादिदेश। किन्तु १४
तस्य प्रजास्तमवज्ञाय मनुष्यमेनम् अस्माकमुपरि राजत्वं न कारयिष्याम
इमां वार्त्तां तन्निकटे प्रेरयामासुः। अथ स राजत्वपदं प्राप्यागतवान् तदा १५
एकैकशो जनो बाणिज्येन किं लब्धवान् इति ज्ञातुं येषु दासेषु मुद्रा अर्प-
यत् तान् आह्वयानेतुम् आदिदेश। तदा प्रथम आगत्य कथितवान् हे प्रभो १६
तव तयैकया मुद्रया दशमुद्रा लब्धाः। ततः स उवाच त्वमुत्तमो दासः १७
स्वल्पेन विश्वास्यो जात इतः कारणात् त्वं दशनगराणाम् अधिपो भव।
द्वितीय आगत्य कथितवान् हे प्रभो तवैकया मुद्रया पञ्च मुद्रा लब्धाः। १८
ततः स उवाच त्वं पञ्चानां नगराणामधिपति र्भव। ततोन्य आगत्य १९ २०
कथयामास हे प्रभो पश्य तव या मुद्रा अहं वस्त्रे बद्धास्थापयम्। त्वं २१
कृपणो यन्नास्थापयस्तदपि गृह्लासि यन्नावपस्तदेव च छिनत्सि ततोहं
त्वत्तो भीतः। तदा स जगाद रे दुष्टदास तव वाक्येन त्वां दोषिणं २२
करिष्यामि यदहं नास्थापयं तदेव गृह्लामि यदहं नावपञ्च तदेव
छिनद्मि, एतादृशः कृपणोहमिति यदि त्वं जानासि तर्हि मम मुद्रा २३
बणिजां निकटे कुतो नास्थापयः? तथा कृतेऽहम् आगत्य कुसीदेन सार्द्धं
निजमुद्रा अप्राप्स्यम्। पश्चात् स समीपस्थान् जनान् आज्ञापयत् तस्मात् २४
मुद्रा आनीय यस्य दशमुद्राः सन्ति तस्मै दत्त। ते प्रोचुः प्रभोऽस्य दश- २५
मुद्राः सन्ति। युष्मानहं वदामि यस्याश्रये वर्द्धते ऽधिकं तस्मै दायिष्यते २६
किन्तु यस्याश्रये न वर्द्धते तस्य यद्यदस्ति तदपि तस्मान् नायिष्यते। किन्तु २७

ममाधिपतित्वस्य वशत्वे स्थातुम् असम्मन्यमाना ये मम रिपवस्तानानीय मम समक्षं संहरत।
२८　इत्युपदेशकथां कथयित्वा सोग्रगः सन् यिरूशालमपुरं ययौ। ततो
२९ बैत्फगी बैथनीययोः प्रदेशे जैतुनाद्रेरन्तिकं प्राप्य स शिष्यद्वयम् इत्युक्त्वा
३० प्रेषयामास, युवाममुं सम्मुखस्थग्रामं प्रविश्यैव यं कोपि मानुषः कदापि
३१ नारोहत् तं गर्द्दभशावकं बद्धं द्रक्ष्यथः तं मोचयित्वानय तं। तत्र कुतो मोचयथ इति चेत् कोपि वक्ष्यति तर्हि वक्ष्यथः प्रभोरत्र प्रयोजनम् आस्ते।
३२ तदा तौ प्रेरितौ गत्वा तत्कथानुसारेण सर्व्वं प्राप्तौ। गर्द्दभशावकमोचनकाले
३३ तत्स्वामिन ऊचुः गर्द्दभशावकं कुतो मोचयथः? तावूचतुः प्रभोरत्र प्रयोजनम्
३४ आस्ते। पश्चात् तौ तं गर्द्दभशावकं यीशोरन्तिकमानीय तत्पृष्ठे निज-
३५
३६ वसनानि पातयित्वा तदुपरि यीशुमारोहयामासतुः। अथ यात्राकाले
३७ लोकाः पथि स्ववस्त्राणि पातयितुम् आरेभिरे। अपरं जैतुनाद्रेरुपत्यकां प्राप्य शिष्यसंघो यीशोः पुर्व्वदृष्टं महाकर्म्म स्मृत्वा यो राजा प्रभो र्नाम्ना-
३८ याति स धन्यः स्वर्गे कुशलं सर्व्वोच्चे जयध्वनि र्भवतु, कथामेतां कथयित्वा
३९ सानन्दम् उच्चैर् ईश्वरं धन्यं वक्तुमारेभिरे। तदा लोकारण्यमध्यस्थाः कियन्तः फिरूशिन इति श्रुत्वा यीशुं प्रोचुः, हे उपदेशक स्वशिष्यान् तर्जय।
४० स उवाच युष्मानहं वदामि यद्यमी नीरवास्तिष्ठन्ति तर्हि पाषाणा उच्चैः कथाः कथयिष्यन्ति।
४१　पश्चात् तत्पुरान्तिकमेत्य तदवलोक्य साश्रुपातं जगाद हा हा चेत्
४२ त्वमग्रेऽज्ञास्यः, अर्थात् तव दिनेषु तिष्ठत्सु यदि स्वमङ्गलम् उपालप्स्यथाः,
४३ तर्ह्युत्तमम् अभविष्यत् किन्तु क्षणेस्मिन् तत्तव दृष्टेरगोचरम् भवति। त्वं स्वत्राणकाले न मनो न्यधत्था इतिहेतो र्यदा तव रिपवस्त्वां चतुर्दिक्षु
४४ प्राचीरेण वेष्टयित्वा रोत्स्यन्ति बालकैः सार्द्धं भूमिसात् करिष्यन्ति च त्वन्मध्ये पाषाणैकोपि पाषाणोपरि न स्थास्यति च, काल ईदृश उपस्थास्यति।
४५　अथ मध्येमन्दिरं प्रविश्य तत्रस्थान् क्रयिविक्रयिणो बहिष्कर्त्तुम् आरभ्या-
४६ वदत् लिपिरास्ते 'मद्गृहं प्रार्थनागृहं किन्तु यूयं तदेव चोराणां गह्वरं

कुरुथ।' पश्चात् स प्रत्यहं मध्येमन्दिरम् उपदिदेश ; ततः प्रधानयाजका ४७
अध्यापकाः प्राचीनाश्च तं नाशयितुं चिचेष्टिरे ; किन्तु तदुपदेशे सर्व्वे ४८
लोका निविष्टचित्ताः स्थितास्तस्मात् ते तत्कर्त्तुं नावकाशं प्रापुः।

---

२० विंशोऽध्यायः।

१ प्रधानयाजकाध्यापकानां निरुत्तरकरणं ९ द्राक्षाक्षेत्रस्य दृष्टान्तः १९ कर याजकाध्यापकानां निरुत्तरकरणं २७ श्मशानादुत्थाने सिदूकीनां निरुत्तरकरणं ४१ स्वस्मिन् अध्यापकानां निरुत्तरकरणञ्च।

अथैकदा यीशु र्मन्दिरे सुसंवादं प्रचारयन् लोकानुपदिशति, एतर्हि १
प्रधानयाजका अध्यापकाः प्राञ्चश्च तन्निकटमागत्य पप्रच्छुः कयाज्ञया त्वं २
कर्म्माण्येतानि करोषि? को वा त्वामाज्ञापयत्? तदस्मान् वद। स ३
प्रत्युवाच तर्हि युष्मानपि कथामेकां पृच्छामि तस्योत्तरं वदत। योहनो ४
मज्जनम् ईश्वरस्य मानुषाणां वाज्ञातो जातं? ततस्ते मिथो विविच्य जगदुः ५
यदीश्वरस्य वदामस्तर्हि तं कुतो न प्रत्यैत स इति प्रक्ष्यति। यदि मनुष्य- ६
स्येति वदामस्तर्हि सर्व्वे लोका अस्मान् पाषाणै र्हनिष्यन्ति यतो योहन
भविष्यद्वादीति सर्व्वे दृढं जानन्ति। अतएव ते प्रत्यूचुः कस्याज्ञया जातम् ७
इति वयं वक्तुं न शक्नुमः। तदा यीशुरवदत् तर्हि कयाज्ञया कर्म्माण्येतानि ८
करोमीति च युष्मान् न वक्ष्यामि।

अथ लोकानां साक्षात् स इमां दृष्टान्तकथां वक्तुमारेभे कश्चिद् द्राक्षा ९
क्षेत्रं कृत्वा तत् क्षेत्रं कृषीवलानां हस्तेषु समर्प्य बहुकालार्थं दूरदेशं जगाम।
अथ फलकाले फलानि प्राप्तुं कृषीवलानां समीपे दासं प्राहिणोत् किन्तु १०
कृषीवलास्तं प्रहृत्य रिक्तहस्तं विससर्जुः। ततः सोऽधिपतिः पुनरन्यं दासं ११
प्रेषयामास, ते तमपि प्रहृत्य कु व्यवहृत्य रिक्तहस्तं विससर्जुः। ततः स तृतीय- १२
वारम् अन्यं प्राहिणोत् ते तमपि क्षताङ्गं कृत्वा बहि र्निचिक्षिपुः। तदा १३
क्षेत्रपति र्विचारयामास ममेदानीं किं कर्त्तव्यं? मम प्रिये पुत्रे प्रहिते ते
तमवश्यं दृष्ट्वा समादरिष्यन्ते। किन्तु कृषीवलास्तं निरीक्ष्य परस्परं १४
विविच्य प्रोचुः, अयमुत्तराधिकारी, आगच्छतैनं हन्मस्ततोऽधिकारोऽस्माकं
भविष्यति। ततस्ते तं क्षेत्राद् बहि र्निपात्य जघ्नुस्तस्मात् स क्षेत्रपतिस्तान् १५

१६ प्रति किं करिष्यति? स आगत्य तान् कृषीवलान् हत्वा परेषां हस्तेषु
तत्क्षेत्रं समर्पयिष्यति; इति कथां श्रुत्वा ते ऽवदन् एतादृशी घटना न
१७ भवतु। किन्तु यीशुस्तानवलोक्य जगाद तर्हि

'स्थपतयः करिष्यन्ति ग्रावाणं यन्तु तुच्छकं।
प्रधानप्रस्तरः कोणे स एव हि भविष्यति।'

१८ एतस्य शास्त्रीयवचनस्य किं तात्पर्य्यं? अपरं तत्पाषाणोपरि यः
पतिष्यति स भंच्यते किन्तु यस्योपरि स पाषाणः पतिष्यति स तेन
धूलिवच् चूर्णीभविष्यति।

१९ सोऽस्माकं विरुद्धं दृष्टान्तमिमं कथितवान् इति ज्ञात्वा प्रधानयाजका
२० अध्यापकाश्च तदैव तं धर्तुं ववाञ्छुः किन्तु लोकेभ्यो बिभ्युः। अतएव तं प्रति
सतर्काः सन्तः कथं तद्वाक्यदोषं धृत्वा तं देशाधिपहस्ते शासने च समर्प-
यितुं शक्नुवन्ति, एतदर्थं कतिपयान् साधुवेशधारिणश्चरान् तस्य समीपे
२१ प्रेषयामासुः। तदा ते तं पप्रच्छुः, हे उपदेशक भवान् यथार्थं कथयन्
उपदिशति कमप्यनपेक्ष्य सत्यत्वेनैश्वरं मार्गमुपदिशति, वयमेतज्जा-
२२ नीमः। कैसरराजाय करोऽस्माभि र्देयो न वा? स तेषां वञ्चनं ज्ञात्वा-
२३ वदत् कुतो मां परीक्षध्वे? मां मुद्रामेकां दर्शयत। इह लिखिता मूर्त्ति-
२४ रियं नाम च कस्य? तेऽवदन् कैसरस्य। तदा स उवाच तर्हि कैसरस्य द्रव्यं
२५ कैसराय दत्त; ईश्वरस्य तु द्रव्यमीश्वराय दत्त। तस्माल्लोकानां साक्षात्
२६ तत्कथायाः कमपि दोषं धर्तुमप्राप्य ते तस्योत्तरादाश्चर्य्यं मन्यमाना
मौनिनस्तस्थुः।

२७ अपरञ्च श्मशानादुत्थानानङ्गीकारिणां सिदूकीनां कियन्तो जना
२८ आगत्य तं पप्रच्छुः, हे उपदेशक शास्त्रे मुसा अस्मान् प्रतीति लिलेख यस्य
भ्राता भार्य्यायां सत्यां निःसन्तानो म्रियते स तज्जायां विवह्य
२९ तद्वंशम् उत्पादयिष्यति। तथाच केचित् सप्त भ्रातर आसन् तेषां ज्येष्ठो
३० भ्राता विवह्य निरपत्यः प्राणान् जहौ। अथ द्वितीयस्तस्य जायां विवह्य
३१ निरपत्यः सन् ममार। तृतीयश्च तामेव व्युवाह; इत्थं सप्तभ्रातरस्तामेव विवह्य

निरपत्याः सन्तो मम्रुः। शेषे सा स्त्री च ममार। अतएव श्मशानादुत्थान- ३२
काले तेषां सप्तजनानां कस्य सा भार्य्या भविष्यति? यतः सा तेषां सप्तानां- ३३
मेव भार्य्यासीत्। तदा यीशुः प्रत्युवाच, अस्य जगतो लोका विवहन्ति ३४
वाग्दत्ताश्च भवन्ति किन्तु ये तज्जगत्प्राप्तियोग्यत्वेन गणिता भविष्यन्ति ३५
श्मशानाच्चोत्थास्यन्ति ते न विवहन्ति वाग्दत्ताश्च न भवन्ति ते पुन ३६
र्न म्रियन्ते किन्तु श्मशानादुत्थापिताः सन्त ईश्वरस्य सन्तानाः स्वर्गीय-
दूतानां सदृशाश्च भवन्ति। अधिकन्तु मूसास्तम्बान्तिके स्थित्वा परमेश्वर ३७
ईब्राहीम ईश्वर इस्हाक ईश्वरो याकुबश्चेश्वर इत्युक्त्वा मृतानां श्मशानाद्
उत्थानस्य प्रमाणं लिलेख। अतएव य ईश्वरः स मृतानां प्रभु र्न किन्तु ३८
जीवतामेव प्रभुः, तन्निकटे सर्व्वे जीवन्तः सन्ति। इति श्रुत्वा कियन्तो- ३९
ध्यापका ऊचुः, हे उपदेशक भवान् भद्रं प्रत्युक्तवान्। इतः परं तं किमपि ४०
प्रष्टुं तेषां साहसं नाभूत्।

पश्चात् स तान् उवाच यः ख्रीष्टः स दायूदः सन्तान एतां कथां लोकाः ४१
कथं कथयन्ति? यतः

४२ 'मम प्रभुमिदं वाक्यमवदत् परमेश्वरः।
४३ तव शत्रूनहं यावत् पादपीठं करोमि न।
तावत् कालं मदीये त्वं दक्षपार्श्व उपाविश।

इति कथां दायूद् स्वयं गीतग्रन्थेऽवदत्। अतएव यदि दायूद् तं प्रभुं ४४
वदति तर्हि स कथं तस्य सन्तानो भवति?

पश्चाद् यीशुः सर्व्वजनानां कर्णगोचरे शिष्यानुवाच येऽध्यापका ४५
दीर्घपरिच्छदं परिधाय भ्रमन्ति हट्टापणयोर्नमस्कारे भजनगेहस्य ४६
प्रोच्चासने भोजनगृहस्य प्रधानस्थाने च प्रीयन्ते तथा विधवानां सर्व्वस्वं
ग्रसित्वा छलेन दीर्घकालं प्रार्थयन्ते तेषु सावधाना भवत तेषामुग्रदण्डो ४७
भविष्यति।

## २१ एकविंशोऽध्यायः।

१ विधवाया दानकथनं ५ मन्दिरविनाशे भविष्यद्वाक्यं १० शिष्याणां दुःखे भविष्यद्वाक्यं २० लोकानां दुःखे भविष्यद्वाक्यं २९ उडुम्बरवृक्षस्य दृष्टान्त उपदेशश्च ३७ खीष्टस्य यातायातकथा च।

१ अथ धनिलोका भाण्डागारे धनं निक्षिपन्ति स तदेव पश्यति एतर्हि
२ काचिद्दीना विधवा पणद्वयं निक्षिपति तद् ददर्श। ततो यीशुरुवाच
३ युष्मानहं यथार्थं वदामि दरिद्रेयं विधवा सर्व्वेभ्योऽधिकं न्यक्षेप्सीत् यतोऽन्ये
४ स्वप्राज्यधनेभ्य ईश्वराय किञ्चित् न्यक्षेप्सुः किन्तु दरिद्रेयं विधवा दिनयापनार्थं स्वस्य यत् किञ्चित् स्थितं तत् सर्व्वं न्यक्षेप्सीत्।
५ अपरञ्च उत्तमप्रस्तरैरुत्सृष्टद्रव्यैश्च मन्दिरं सुशोभते तत्र कैश्चि-
६ दित्युक्ते स प्रत्युवाच यूयं यदिदं निचयनं पश्यथ, अस्य पाषाणैकोऽप्यन्य-
७ पाषाणोपरि न स्थास्यति सर्व्वे भूसाद्भविष्यन्ति कालोऽयमायाति। तदा ते पप्रच्छुः, हे गुरो घटनेदृशी कदा भविष्यति? घटनाया एतस्यास्चिह्नं वा
८ किं भविष्यति? तदा स जगाद सावधाना भवत यथा युष्माकं भ्रमं कोपि न जनयति, ख्रीष्टोऽहमित्युक्त्वा मम नाम्ना बहव उपस्थास्यन्ति स कालः
९ प्रायेणोपस्थितः, तेषां पश्चान्मा गच्छत। एवं युद्धस्योपप्लवस्य च वार्त्तां श्रुत्वा मा शङ्कध्वं यतः प्रथमम् एता घटना अवश्यं भविष्यन्ति किन्तु नापाते युगान्तो भविष्यति।
१० अपरञ्च कथयामास तदा देशस्य विपक्षत्वेन देशः राज्यस्य विपक्षत्वेन
११ राज्यम् उत्थास्यति नानास्थानेषु महाभूकम्पो दुर्भिक्षं मारी च भविष्यन्ति तथा व्योममण्डलस्य भयङ्करदर्शनम् आश्चर्य्यलक्षणञ्च
१२ प्रकाशयिष्यते। किन्तु सर्व्वासामेतासां घटनानां पूर्व्वं लोका युष्मान् धृत्वा ताडयिष्यन्ति भजनालये कारायाञ्च समर्पयिष्यन्ति च, तथा मम नामकारणाद् युष्मान् भूपानां शासकानाञ्च सम्मुखं नेष्यन्ति
१३ साक्ष्यार्थम् एतानि युष्मान् प्रति घटिष्यन्ते। तदा किमुत्तरं वक्तव्यम्
१४ एतत् न चिन्तयिष्याम इति मनःसु निश्चिनुत। विपक्षा येन
१५ किमप्युत्तरम् आपत्तिञ्च कर्तुं न शक्ष्यन्ति तादृशं वाक्पटुत्वं ज्ञानञ्च

युष्मभ्यं दास्यामि। किञ्च यूयं पित्रा मात्रा भ्रात्रा बन्धुना ज्ञात्या १६
कुटुम्बेन च परकरेषु समर्पयिष्यध्वे; ततस्ते युष्माकं कञ्चन कञ्चन १७
घातयिष्यन्ति। मम नाम्नः कारणात् सर्व्वै र्मनुष्यै र्यूयं ऋतीयिष्यध्वे। १८
किन्तु युष्माकं शिरःकेशैकोपि न विनाशयिष्यते तस्मादेव धैर्य्यमवलम्ब्य १९
स्वस्वप्राणान् रक्षत।

अपरञ्च यिरूशालम् पुरं सैन्यवेष्टितं विलोक्य तस्योच्छिन्नतायाः २०
समयः समीप इत्यवगमिष्यथ। तदा यिहूदादेशस्था लोकाः पर्व्वतं पलायन्तां २१
ये च नगरे तिष्ठन्ति ते देशान्तरं पलायन्तां ये च ग्रामे तिष्ठन्ति ते नगरं
न प्रविशन्तु यतस्तदा समुचितदण्डनाय धर्म्मपुस्तके यानि सर्व्वाणि लिखि- २२
तानि तानि सफलानि भविष्यन्ति। किन्तु या यास्तदा गर्ब्भवत्यःस्तन्य- २३
दाश्च तासां दुर्गति र्भविष्यति यतो हेतोरेताल्लोकान् प्रति कोपो देशे च
विषमदुर्गति र्घटिष्यते। वस्तुतस्तु ते खड्गधारापरिष्वङ्गं लप्स्यन्ते बद्धाः २४
सन्तः सर्व्वदेशेषु नायिष्यन्ते च किञ्चान्यदेशीयानां समयोपस्थितिपर्य्यन्तं
यिरूशालम् पुरं तैः पदतलै र्दलयिष्यते। सूर्य्यचन्द्रनक्षत्रेषु लक्षणादि २५
भविष्यति भुवि सर्व्वदेशीयानां दुःखं चिन्ता च सिन्धौ वीचीनां तर्जनं
गर्जनञ्च भविष्यति। भूभौ भाविघटनां चिन्तयित्वा मनुजा भिया मृतकल्पा २६
भविष्यन्ति यतो व्योममण्डले तेजस्विनो दोलायमाना भविष्यन्ति। तदा २७
पराक्रमेण महातेजसा च मेघारूढं मनुष्यपुत्त्रं आयान्तं द्रक्ष्यन्ति। किन्त्वे- २८
तासां घटनानामारम्भे सति यूयं मस्तकान्युत्तोल्य ऊर्द्ध्वं द्रक्ष्यथ यतो
युष्माकं मुक्तेः कालः सविधो भविष्यति।

ततस्तेनैतद्दृष्टान्तकथा कथिता, पश्यत उडुम्बरादिवृक्षाणां नवीनपत्रेषु २९
जातेषु तद्दृष्ट्वा निदाघकाल उपस्थित इति यथा यूयं ज्ञातुं शक्नुथ तथा ३०
सर्व्वासामासां घटनानाम् आरम्भे दृष्टे सतीश्वरस्य राजत्वं निकटम् इत्यपि ३१
ज्ञास्यथ। युष्मानहं यथार्थं वदामि विद्यमानलोकानामेषां गमनात् पूर्व्वं ३२
एतानि घटिष्यन्ते; वरं नभोभुवोर्लोपो भविष्यति मम वाक् तु कदापि ३३
लुप्ता न भविष्यति। अतएव विषमाशने पाने च सांसारिक्यां चिन्तायाञ्च ३४

युष्माकं चित्तेषु मत्तेषु तद्दिनम् अकस्माद् युष्मान् प्रति यथा नोप-
३५ तिष्ठति तदर्थं स्वेषु सावधानास्तिष्ठत एतद्देशस्थसर्व्वलोकान् प्रति
३६ तद्दिनम् उन्माथ इव उपस्थास्यति। यथा यूयं एतद्भाविघटना उत्तर्त्तुं
मनुजसुतस्य सम्मुखे संस्थातुञ्च योग्या भवथ कारणादस्मात् सावधानाः
सन्तो निरन्तरं प्रार्थयध्वं।
३७ अपरञ्च स दिवा मन्दिर उपदिश्य रात्रौ जैतुनाद्रिं गत्वातिष्ठत्
३८ ततः प्रत्यूषे लोकास्तत्कथां श्रोतुं मन्दिरे तदन्तिकम् आगच्छन्।

---

## २२ द्वाविंशोऽध्यायः।

१ ख्रीष्टस्य विरुद्धकुमन्त्रणा ७ निस्तारोत्सवीयभोज्यासादनं १५ प्रभो रात्रिभोज्य-निरूपणं २१ परकरार्पकस्य कथा २४ नम्रत्वोपदेशः ३१ पितरस्यानङ्गीकारकथनं ३५ शिष्यान् प्रति प्रश्नः ३९ उद्याने ख्रीष्टस्य दुःखं ४७ यिहूदाविश्वासघातित्वं ५५ पितरस्यानङ्गीकारः ६३ ख्रीष्टं प्रत्युपहासः प्रहारश्च ६६ विचारे स्वसाक्ष्यदानञ्च।

१ अपरञ्च किण्वशून्यपूपोत्सवस्य काल उपस्थिते प्रधानयाजका अध्या-
२ पकाश्च यथा तं हन्तुं शक्नुवन्ति तथोपायम् अचेष्टन्त किन्तु लोकेभ्यो
३ बिभ्युः। एतस्मिन् समये द्वादशशिष्येषु गणित इष्कारियोतीयरूढिमान्
४ यो यिहूदास्तस्यान्तःकरणस्य शैतानाश्रितत्वात् स गत्वा यथा यीशुं तेषां
करेषु समर्पयितुं शक्नोति तथा मन्त्रणां प्रधानयाजकैः सेनापतिभिश्च सह
५ चकार। तेन ते तुष्टास्तस्मै मुद्रां दातुं पणं चक्रुः। ततः सोऽङ्गीकृत्य यथा लोका-
६ नामगोचरे तं परकरे समर्पयितुं शक्नोति तथावकाशं चेष्टितुमारेभे।
७ अथ किण्वशून्यपूपोत्सव दिने, अर्थात् यस्मिन् दिने निस्तारोत्सवस्य
८ मेषो हन्तव्यस्तस्मिन् दिने यीशुः पितरं योहनञ्चाहूय जगाद युवां गत्वा-
९ स्माकं भोजनार्थं निस्तारोत्सवस्य द्रव्याण्यासादयतं। तदा तौ पप्रच्छतुः
१० कुत्रासादयावो भवतः केच्छा? तदा सोवादीत् नगरे प्रविष्टे कश्चिज्जल-
११ कुम्भमादाय युवां साक्षात् करिष्यति स यन्निवेशनं प्रविशति युवामपि
तन्निवेशनं तत्पश्चादित्वा निवेशनपतिम् इतिवाक्यं वदतं, यत्राहं निस्तारो-
त्सवस्य भोज्यं शिष्यैः सार्द्धं भोक्तुं शक्नोमि सातिथिशाला कुत्र? कथामिमां
१२ प्रभुस्त्वां पृच्छति। ततः स जनो द्वितीयप्रकोष्ठीयम् एकं शस्तं कोष्ठं दर्शयि-

ष्यति तत्र भोज्यमासादयतं। ततस्तौ गत्वा तद्वाक्यानुसारेण सर्व्वं दृष्ट्वा १३
तत्र निस्तारोत्सवीयं भोज्यमासादयामासतुः।

अथ काल उपस्थिते यीशु र्द्वादशभिः प्रेरितैः सह भोक्तुमुपविश्य कथित- १४
वान् मम दुःखभोगात् पूर्व्वं युष्माभिः सह निस्तारोत्सवस्यैतस्य भोज्यं भोक्तुं १५
मयातिवाञ्छा कृता। युष्मान् वदामि यावत्कालम् ईश्वरराज्ये भोजनं १६
न करिष्ये तावत्कालम् इदं न भोक्ष्ये। तदा स पानपात्रमादाय ईश्वरस्य १७
गुणान् कीर्त्तयित्वा तेभ्यो दत्त्वावदत् इदं गृह्णीत यूयं विभज्य पिवत
युष्मान् वदामि यावत्कालम् ईश्वरराजत्वस्य संस्थापनं न भवति तावत् १८
द्राक्षाफलरसं न पास्यामि। ततः पूपं गृहीत्वा ईश्वरगुणान् कीर्त्तयित्वा १९
भङ्क्त्वा तेभ्यो दत्त्वावदत् युष्मदर्थं समर्पितं यन्मम वपुस्तदिदं एतत् कर्म्म मम
स्मरणार्थं कुरुध्वं। अथ भोजनान्ते तादृशं पात्रं गृहीत्वावदत् युष्मत्कार- २०
णात् पातितं यन्मम रक्तं तेन निर्णीतं नव्यनियमरूपं पानपात्रमिदं।

पश्यत यो मां परकरेषु समर्पयिष्यति स मया सह भोजनासन २१
उपविशति। यथा निरूपितमास्ते तदनुसारेण मनुष्यपुत्रस्य गति २२
र्भविष्यति किन्तु यस्तं परकरेषु समर्पयिष्यति तस्य सन्तापो भवि-
ष्यति। तदा तेषां को जन एतत् कर्म्म करिष्यति तत् ते परस्परं २३
प्रष्टुमारेभिरे।

अपरं तेषां को जनः श्रेष्ठत्वेन गणयिष्यते, अत्रार्थे तेषां विवादोभवत्। २४
अस्मात् कारणात् सोवदत् अन्यदेशीयानां राजानः प्रजानामुपरि प्रभुत्वं २५
कुर्व्वन्ति दारुणशासनं कृत्वापि ते भूपतित्वेन विख्याता भवन्ति च।
किन्तु युष्माकं तथा न भविष्यति यो युष्माकं श्रेष्ठो भविष्यति स कनिष्ठवत् २६
भवतु यश्च मुख्यो भविष्यति स सेवकवद्भवतु। भोजनोपविष्टपरिचारक- २७
योः कः श्रेष्ठः? यो भोजनायोपविशति स किं श्रेष्ठो न भवति? किन्तु युष्माकं
मध्येऽहं परिचारक इवास्मि। अपरञ्च यूयं मम परीक्षाकाले प्रथममारभ्य २८
मया सह स्थिता एतत्कारणात् पिता यथा मदर्थं राज्यमेकं निरूपितं २९
तथानुरूपमपि युष्मदर्थं राज्यं निरूपयामि तस्मान् मम राज्ये भोजनासने ३०

च भोजनपाने करिष्यध्वे सिंहासन उपविश्य च यिहूदीयानां द्वादश-
वंशानां विचारं करिष्यध्वे।

३१ अपरं प्रभुरुवाच हे शिमोन् शिमोन् पश्य तितउना धान्यानीव
३२ युष्मान् शैतान् चालयितुम् ऐच्छत् किन्तु तव विश्वासस्य लोपो यथा न
भवति एतत् त्वदर्थं प्रार्थितं मया त्वन्मनसि परिवर्त्तिते च भ्रातॄणां
३३ मनांसि स्थिरीकुरु। तदा सोवदत् हे प्रभोहं त्वया सार्द्धं कारायां यातुं
३४ मर्त्तुं चोद्यतोस्मि। ततः स उवाच हे पितर त्वां वदामि, अद्य
कुक्कुटरवात् पूर्व्वं त्वं मत्परिचयं वारत्रयम् अपह्नोष्यसे।

३५ अपरं स पप्रच्छ यदा क्षुद्रं वृहन्तं वा वस्त्रसम्पुटं पादुकाञ्च विना युष्मान् प्राहि-
३६ णवं तदा युष्माकं कस्यापि न्यूनतासीत्? ते प्रोचुः कस्यापि न। तदा सोवदत्
किन्त्विदानीं क्षुद्रं वृहन्तं वा वस्त्रसम्पुटं यस्य नास्ति तेन तद् ग्रहीतव्यं यस्य
३७ च कृपाणो नास्ति तेन स्ववस्त्रं विक्रीय स क्रेतव्यः। यतो युष्मानहं वदामि।

'अपराधिजनैः सार्द्धं गणितः स भविष्यति'।

इदं यच्छास्त्रीयं वचनं लिखितमस्ति तन्मयि फलिष्यति यतो मम
३८ सम्बन्धीयं सर्व्वं सेत्स्यति। तदा ते प्रोचुः प्रभो पश्येमौ कृपाणौ स्तः। ततः
सोवदत् एतद् यथेष्टं।

३९ अथ स तस्माद्वहिर्गत्वा स्वाचारानुसारेण जैतुननामाद्रिं जगाम
४० शिष्याश्च तत्पश्चाद् ययुः। तत्रोपस्थाय स तानुवाच यथा परीक्षायां न पतथ
४१ तदर्थं प्रार्थयध्वं। पश्चात् स तस्माद् एकशरक्षेपाद् वहिर्गत्वा जानुनी पात-
४२ यित्वा एतत् प्रार्थयाञ्चक्रे, हे पित र्यदि भवान् सम्मन्यते तर्हि कंसमेनं
ममान्तिकाद् दूरय किन्तु मदिच्छानुरूपं न त्वदिच्छानुरूपं भवतु।
४३ तदा तस्मै शक्तिं दातुं स्वर्गीयदूतो दर्शनं ददौ। पश्चात् सोत्यन्तं यातनया
४४ व्याकुलो भूत्वा पुन र्दृढं प्रार्थयाञ्चक्रे; तस्माद् बृहच्छोणितविन्दव इव तस्य
४५ स्वेदविन्दवः पृथिव्यां पतितुमारेभिरे। अथ प्रार्थनात उत्थाय शिष्याणां
४६ समीपमेत्य तान् मनोदुःखिनो निद्रितान् दृष्ट्वावदत् कुतो निद्राथ, उत्ति-
ष्ठत परीक्षायाम् अपतनार्थं प्रार्थयध्वं।

एतत्कथायाः कथनकाले द्वादशशिष्याणां मध्ये गणितो यिहूदा- ४७
नामा जनतासहितस्तेषाम् अग्रे चलित्वा यीशोश्चुम्बनार्थं तदन्तिकम्
आययौ। तदा यीशुरुवाच हे यिहूदा किं चुम्बनेन मनुष्यपुत्रं परकरेषु ४८
समर्पयसि? तदा यद्यद् घटिष्यते तदनुमाय सङ्गिभिरुक्तं हे प्रभो वयं किं ४९
खड्गाघातं करिष्यामः? तत एकः करवालेनाहत्य प्रधानयाजकस्य दासस्य ५०
दक्षिणं कर्णं चिच्छेद। अधुना निवर्तस्व इत्युक्त्वा यीशुस्तस्य श्रुतिं स्पृष्ट्वा ५१
स्वस्थं चकार। पश्चाद् यीशुः समीपस्थान् प्रधानयाजकान् मन्दिरस्य ५२
सेनापतीन् प्राचीनांश्च जगाद यूयं कृपाणान् यष्टींश्च गृहीत्वा मां किं चोरं
धर्त्तुमायाताः? यदाहं युष्माभिः सह प्रतिदिनं मन्दिरेऽतिष्ठं तदा मां धर्त्तुं ५३
न प्रवृत्ताः किन्त्विदानीं युष्माकं समयोन्धकारस्य चाधिपत्यमस्ति।

अथ ते तं धृत्वा महायाजकस्य निवेशनं निन्युः। ततः पितरो दूरे दूरे ५४
पश्चादित्वा बृहत्कोष्ठस्य मध्ये यत्राग्निं ज्वालयित्वा लोकाः समेत्योपविष्टा- ५५
स्तत्र तैः सार्द्धम् उपविवेश। अथ वह्निसन्निधौ समुपवेशकाले काचिद्दासी ५६
मनो निविश्य तं निरीक्ष्यावदत् पुमानयं तस्य सङ्गेऽस्थात्। किन्तु स तद् ५७
अपह्नुत्यावादीत् हे नारि तमहं न परिचिनोमि। क्षणान्तरेऽन्यजनस्तं ५८
दृष्ट्वाब्रवीत् त्वमपि तेषां निकरस्यैकजनोसि। पितरः प्रत्युवाच हे नर नाह-
मस्मि। ततः सार्द्धदण्डद्वयात् परं पुनरन्यो जनो निश्चित्य बभाषे, एष तस्य ५९
सङ्गीति सत्यं यतोयं गालीलीयो लोकः। तदा पितर उवाच हे नर त्वं ६०
यद् वदसि तदहं बोद्धुं न शक्नोमि, इतिवाक्ये कथितमात्रे कुक्कुटो रुराव।
तदा प्रभुना व्याघुट्य पितरे निरीक्षिते कृकवाकुरवात् पूर्व्वं मां त्रिरप- ६१
ह्नोष्यसे इतिपूर्व्वोक्तं तस्य वाक्यं पितरः स्मृत्वा बहिर्गत्वा महाखेदेन ६२
चक्रन्द।

तदा यै र्यीशुं धृतस्ते तमुपहस्य प्रहर्त्तुमारेभिरे। एवं वस्त्रेण तस्य दृशौ ६३
बद्ध्वा कपोले चपेटाघातं कृत्वा पप्रच्छुः कस्ते कपोले चपेटाघातं कृतवान्? ६४
गणयित्वा तद् वद। तदन्यत् तद्विरुद्धं बहुनिन्दावाक्यं वक्तुमारेभिरे। ६५

अथ प्रभाते सति लोकप्राञ्चः प्रधानयाजका अध्यापकाश्च सभास्था मध्येसभं ६६

६७ यीशुमानीय पप्रच्छुः, त्वम् अभिषिक्तोसि न वास्मान् वद। स प्रत्युवाच मया
६८ तस्मिन्नुक्तेऽपि यूयं न विश्वसिष्यथ। कस्मिंश्चिद्वाक्ये युष्मान् पृष्टेऽपि मां न तदु-
६९ त्तरं वक्ष्यथ न त्यक्ष्यथ च। किन्त्वितः परं मनुजसुतः सर्व्वशक्तिमत ईश्वरस्य
७० दक्षिणे पार्श्वे समुपवेक्ष्यति। ततस्ते पप्रच्छुः, तर्हि त्वमीश्वरस्य पुत्रः? स कथ-
७१ यामास यूयं यथार्थं वदथ सएवाहं। तदा ते सर्व्वे कथयामासुः, तर्हि
साक्ष्येणान्येनास्माकं किं प्रयोजनं? अस्य स्वमुखादेव साक्ष्यं प्राप्तम।

---

२३ त्रयोविंशोऽध्यायः।

१ पिलातस्य हेरोदश्च समीपे ख्रीष्टस्य नयनं १३ पिलातस्य विचारो दण्डाज्ञा च विलापिन्यः स्त्रियः प्रति ख्रीष्टस्य कथा ३२ ख्रीष्टस्य क्रुशे वेधनमुपहासश्च ३९ क्रुशे विद्धस्तेनयोः कथा च ४४ ख्रीष्टस्य निधनं तस्य श्मशाने स्थापनञ्च।

१ ततः सभास्थाः सर्व्वलोका उत्थाय तं पिलातसम्मुखं नीत्वाप्रोद्य वक्तु-
२ मारेभिरे, स्वमभिषिक्तं राजानं वदन्तं कैसरराजाय करदानं निषेधन्तं
३ राज्यविपर्य्ययं कर्त्तुं प्रवर्त्तमानम् एनं प्राप्ता वयं। तदा पिलातस्तं पृष्टवान् त्वं
४ किं यिहूदीयानां राजा? स प्रत्युवाच त्वं सत्यमुक्तवान्। तदा पिलातः
५ प्रधानयाजकादिलोकान् जगाद, अहमेतस्य कमप्यपराधं नाप्तवान्। ततः
ते पुनः साहसिनो भूत्वावदन् एष गालील एतत्स्थानपर्य्यन्ते सर्व्वस्मिन्
६ यिहूदादेशे सर्व्वांल्लोकानुपदिश्य कुप्रवृत्तिं ग्राहीतवान्। तदा पिलातो
७ गालीलप्रदेशस्य नाम श्रुत्वा पप्रच्छ किमयं गालीलीयो लोकः? ततः स
गालील्प्रदेशीयहेरोद्राजाधिकारस्थलोक इति पिलातोवगत्य यिरू-
शालमपुरे हेरोद् राजस्य तदा स्थिते स्तस्य समीपे यीशुं प्रेषयामास।
८ तदा हेरोद् यीशुं विलोक्य सन्तुतोष यतः स तस्य बहुवृत्तान्तश्रवणात्
तस्य किञ्चिदाश्चर्य्यकर्म्म पश्यति इत्याशां कृत्वा बहुकालमारभ्य तं द्रष्टुं
९ प्रयासं कृतवान्। तस्मात् तं बहुकथाः पप्रच्छ किन्तु स तस्य कस्यापि
१० वाक्यस्य प्रत्युत्तरं नोवाच। अथ प्रधानयाजका अध्यापकाश्च प्रोत्तिष्ठन्तः
११ साहसेन तमपवदितुं प्रारेभिरे। एवं हेरोद् तस्य सेनागणश्च तमवज्ञाय
१२ उपहासत्वेन राजवस्त्रं परिधाप्य पुनः पिलातं प्रति तं प्राहिणोत्। पूर्व्वं